## धर्म्मेण धार्य्यते लोकः ॥ २३ ॥

---

दारस्तकभाष्ये । अधीमन्तः स्वयं क्लिश्यन्ति परानपि तापयन्ति । परास्तेषां कुतः सखित्वम् । 'नास्ति धर्म्मसमः सखा' इत्येवं पाठे तु धर्म्म-समो धर्म्मसदृशः सखा सुहृन्नास्तीत्ययमर्थः । तदुक्तं मानवे—

"एक एव सुहृद्धर्म्मो निधनेऽप्यनुयाति यः ।
शरीरेण समं नाशं सर्व्वमन्यत्तु गच्छति" ॥

अपरञ्च 'धर्म्मः सखा परमको परलोकं याति' । 'धर्म्मान्न प्रमदितव्यम्' । 'धर्म्मेण पापमपनुदति' इति श्रुतिः । 'धर्म्मेण गमनमूर्द्ध'मिति कापिलाः । महाभारते 'धारणाद्धर्म्म इत्याहु-र्लोकचरितं चरेदि'ति च । धारणादिति । जगतो विधारणात् लोकस्थितिहेतुर्धर्म्मः । लोकचरितं लोकानां मान्यानां यद् यथेष्टाचरणमाचारानुतिष्ठेत् । 'धीमान् पण्डिते च हृष्मती' । धीर्ध्यानं, ध्यायति अनया, ध्यायतेः सम्प्रसारणञ्चेति वार्त्तिकात् क्विप् । 'हलः' इति दीर्घः । धीरस्यास्तीति मतुप् । धर्म्मः । धरति विश्वं ध्रियते च लोकैरिति धर्म्मः । धृञ् धारणे इत्यस्मा-'दर्त्तिस्तु' इत्यादिना मन् । सखेति । समानः ख्यायते लोकैः 'समाने ख्यः स चोदात्तः' इत्यौणादिकाऽदिन् । अडित्, टिलोपः । 'नौ ख्यो यलोपः' इत्यतोऽनुवर्त्तनाद् यलोपः । समानस्य सभावः ॥ २२ ॥

धर्म्मद्वारा भुवनधारकत्वमाह धर्म्मेणेति । लोको भुवनं

## प्रेतमपि धर्म्माधर्म्मावनुगच्छतः ॥ २४ ॥

लोकमिवहश्चेति । धर्म्मेण विश्वधारकेन धार्य्यते धारणं क्रियते । तथा च श्रुतिः 'धर्म्मो विश्वस्य जगतः प्रतिष्ठा' इति । अन्यच्च स्मृतौ 'धर्म्मो धरा धारकः' इति । धर्म्माभावे तु लोकस्थित्यभावात् सर्व्वोच्छेदप्रसङ्गः ।

'स धर्म्मो द्विविधः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्चे'ति श्रीभगवच्छङ्कराचार्य्ये । शान्तिपर्व्वणि च

'प्रवृत्तिलक्षणो धर्म्मः निवृत्तौ च व्यवस्थितः' ।

यद्यपि निवृत्तिलक्षणधर्म्मानिर्व्वाणामिप्सयापि तयोर्मध्ये प्रवृत्तिलक्षणधर्म्मस्य प्राथम्यं प्रवृत्तिपूर्व्वकत्वात्रिवृत्तेः । अत्र नीतौ च प्रवृत्तिधर्म्मस्याभिमतं सदुपयोगित्वञ्चेति ।

"धर्म्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ" ।

इति मेदिनी । प्रसङ्गादुच्यते यथः । प्रागुक्तमन्यत् ॥ २३ ॥

नापि जीवितान् प्रत्येव नियतं धर्म्मस्यानुसरणमपि तु प्रेतं प्रत्यपि तदाह प्रेतमिति । प्रेतं मृतात्मानं लोकान्तरमाः तमनु पश्चात् धर्म्माधर्म्मौ पुण्यपापफले गच्छतः अनुसरतः । न केवलं जीवितान् प्रति । तदुक्तं महर्षिमनुना—

"मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं क्षितौ ।
विमुखा बान्धवा यान्ति धर्म्मस्तमनुगच्छति" ॥

न्यायमये तु धर्म्माधर्म्मयोरदृष्टरूपेणात्मसमवेतत्वात् किमिह काले परलोकेऽपि तौ चात्मानमनुगमिष्यतः । तथाहि—'यतो-

## दया धर्मस्य जन्मभूमिः ॥ २५ ॥

---

ऽभ्युदयनिःश्रेयससिद्धिः स धर्मः' इति काणादाः । 'चोदनालक्षणोऽर्थो धर्मः' इति जैमिनीयाः । 'दशलक्षणको धर्मः' इति मानवाः । 'वेदप्रणिहितो धर्मः' इति पौराणिकाः । तद्विरुद्धस्त्वधर्मः । स ऐहिकदुःखदायकः पारत्रिकनिर्वाणविघातकः । बौद्धार्हतादीनामपि ब्रह्मचर्याहिंसा वैराग्यकरुणामैत्र्यादिरूपो धर्मोऽस्ति । 'मैत्री भूतान्तरे पुंसि गुणी स्यादार्यलिङ्गकः' इति मेदिनी । मैत्रः प्रकर्षेणितः लोकान्तरं गतः । इण् गतौ, एति । ततः त्रप्रत्ययेन मित्रम् । पूर्वमुक्तमन्यत् ॥ २४ ॥

धर्मस्येह परलोककार्यसाधकत्वमुक्त्वा सम्प्रति तस्य दयाकारकत्वमाह दयेति । दयानुकम्पा परदुःखप्रहाणेच्छेति यावत् । धर्मस्याभ्युदयनिःश्रेयससिद्धिहेतोर्जन्मभूमिः । कर्मणः समुत्पत्तेर्भूमिराकरः । दयाया अभावे धर्माभावः । तदभावे च चित्तप्रसादनस्याप्यभावः । मैत्री करुणा मुदितादीनां सर्वधर्मेषु चित्तप्रसादनकारणत्वात् । चित्तप्रसादनस्य दया समाधिर्भवति । अतः सा प्रभवभूमिर्धर्मस्य । तथा च बृहस्पतिः—

"परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा ।
आत्मवद्वर्त्तितव्यं हि दयैषा परिकीर्त्तिता" ॥

'दयाभूतहितैषित्वम्' इति गोविन्दभट्टः । स्मृतौ च—

"कृपा दयानुकम्पा च करुणानुग्रहस्तथा ।
हितेच्छा दुःखहानेच्छा सा दया कथ्यते बुधैः" ॥

धर्ममूले सत्यदाने ॥ २६ ॥

धर्मेण जयति लोकान् ॥ २७ ॥

---

दयदानगतिहिंसा रक्षणेषु । दयति, रक्षति अनया । ततो भिदादित्वादङ्, स्त्रियामाप् च ॥ २५ ॥

सत्यदानयोर्द्वयोर्धर्ममूलत्वमाह धर्मेति । सत्यमत्र यथा मदनुबोधकम् । दानं धर्मरुचितबुद्ध्या स्वद्रव्यस्य सत्पात्रे समर्पणम् । एते द्वे धर्ममूले स्तः । धर्मो मूलं ययोः सत्यदानयोस्ते । सत्यन्दानञ्च धर्मप्रकृतिके भवतः । नह्येते तद्विरुद्धे भविष्यतः । अन्यच्च मानवोक्त-दशलक्षणात्मकधर्मे च सत्यस्यान्तर्गतत्वात् । अपरञ्चोक्तं स्मृतौ—

'इज्याऽध्ययनदानानि धृतिः सत्यं तपः क्षमा ।

अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः' ॥

छान्दोग्यश्रुतौ च 'त्रयोधर्मस्कन्धा यज्ञोऽध्ययनन्दानञ्चे'ति । 'सत्यं शस्ते च शपथे तथ्ये च त्रिषु तद्वति' । इति कोषः सति परमेश्वरेऽयं साधुरिति सत्यम् । 'तत्र साधु'रिति यत् । दाञ् दाने, ददातेर्ल्युट् ॥ २६ ॥

धर्मस्य लोकजये श्रेष्ठत्वमाह धर्मेणेति । धर्मेण सदनुष्ठानेन तत्प्रचारेण च सर्वान् लोकान् जयति । लोकेषु धार्मिकः श्रेष्ठः कीर्तिमान् भवति ।

## मृत्युरपि धार्म्मिकं रक्षति ॥ २८ ॥
## धर्म्माद्विपरीतः पापः ॥ २९ ॥

तदुक्तम् ईश्वरकृष्णेन "धर्मेण गमनमूर्द्धं गमनमधस्ताद्भवत्यधर्मेण" इति। धार्मिकान् धीमतोजनान् सर्व्वे विश्वसन्ति, चाद्रियन्ते च। धर्मेण लोकमिमं विजित्य ऊर्द्धं स्वर्गप्रभृतिषु लोकेषु गच्छन्ति। अधर्म्मेण नरकादिषु अधोगतिः लोकित्वयमसिय। 'लोकोविश्वे जने' इति हैमः। लोक दर्शने, लोक्यते इति लोकः। यथा सिद्धः ॥ २७ ॥

धार्मिकस्य मृत्युतोऽपि रक्षामाह मृत्युरिति। मृत्युर्मरणम् निधनमिति। यमोवा। धर्म्मिणं धार्मिकं जनं रक्षति पालयति। यमोऽपि धार्मिकं नेतुं न शक्नोति। धर्म्मबलेन निर्दिष्टमृत्युकालमतीत्य दीर्घायुर्भवति। स्वर्गमपि गच्छति। मृत्युमुत्कटतपोबलेनामर इव भवति। यथा मार्कण्डेयादिः। 'मृत्युर्ना मरणे यमे' इति मेदिनी। शृत्युर्भौतिकदेहात् प्राणिनां प्राणवायोः सम्यग् वहिर्गमनविशेषः। मृत्युरिति। मृङ् प्राणत्यागे, म्रियते। 'भुजिमृङ्भ्यां युक्तुकौ' इत्यौणादिकसूत्रेण त्युक् ॥ २८ ॥

पापस्य धर्मवैपरीत्यमाह धर्मादिति। धर्मात् सुकृतेः पुण्यादेरिति। पापः दुरितं कलुषं दुष्कृतिश्च। विपरीतो भिन्नः कार्य्ये सुखफलयोः प्रभेदात् पृथगिति। पापेनाधोगतिश्च। अतः पापं हित्वा धर्माचरणं विधेयम्। 'नित्यनैमित्तिकैरेव कुर्व्वाणो-

यत्र यत्र प्रसज्यते तत्र तत्र ध्रुवा स्मृतिः ॥३०॥

दुरितचय'मिति। धर्मस्य च पापनाशकत्वम्। तथाच श्रुतिः 'धर्मेण पापमपनुदति'। स्मृतिश्च—'लिप्यते न स पापेन पद्मपत्रमिवाम्भसा'। 'पापं किल्विष कल्मषम्' इत्यमरः। पा पाने, पिबति भक्षयति कर्त्तारम्। इत्यतः 'पानीविषिभ्यः प.'। 'भीमादित्वादपादाने' इति सिद्धम्। अथवा धर्मात्सत्कार्याद्विपरीतः विरुद्धाचरणशीलः। पापः पापीति। कलुषवान् पुरुषः स नियतं धर्मविरुद्धाचरणं करोति। एतस्मिन् पक्षे पापमस्यास्तीति 'अर्श आदच्'। अन्यथा पापशब्दस्य स्वतः क्लीवत्वम् ॥ २९ ॥

कार्ये नियुक्तस्य पुंसः स्मृतिर्भोव्यमाह यत्रेति। यत्र यत्र यस्मिन् यस्मिन् कर्मणि लोकः प्रसज्यते प्रसक्तो निरतस्तत्कार्यसम्पादने समुद्यतो भवति। शुभे कर्मणि पुण्यस्मृतिः। अशुभे कर्मणि अकीर्त्तिस्मृतिश्च। तत्र तत्र कर्मणि ध्रुवा नियता चिरस्थायिनी स्मृतिः कार्यसम्पादन नैपुण्याद्भवति। तत्रैव कर्मणि निरतः स्वार्थेन लोकोपकृतिः शाश्वती स्मृतिश्च स्यात्। अथवा अनुष्ठितेषु कर्मसु ध्रुवा भ्रमशून्या स्मृतिरावश्यकीति। यतः स्मृतिभ्रंशात् कार्यनाशो बुद्धिनाशश्च भवति। स्मृतौ संस्कारमात्रजन्यत्वात् कार्यसंस्कारः प्रयोजनम्। यद्वा स्मृतिः स्मारकमित्यर्थः।

'स्थिते नित्ये निश्चिते च ध्रुवं खेऽजस्र तर्कयोः'।

इति हैममेदिन्यौ। ध्रु स्थैर्य्ये, ध्रुव गतौ वा, ध्रुवति। 'इगुपध' इत्यादिना कः। यद्वा कूटादित्वात् ङित्वम्। उवङ्

## महती प्रसज्येत ॥ ३१ ॥

## लोके प्रशस्तः स मतिमान् ॥ ३२ ॥

---

च। 'ध्रुवा रतिः' एवं पाठे तु रतिः सत्यासक्तिरित्यर्थः। केचित्तु सूत्रद्वयमेकीकृत्यान्यथा पाठमेतमङ्गीकुर्व्वन्ति। तथा च 'धर्माद्विपरीतं पापं यत्र यत्र प्रसज्यते तत्र धर्मावमतिर्महती प्रसज्यते'। इत्थं पाठे सूत्रार्थः सुगमः ॥ ३० ॥

धर्मस्य महतीमवमानामाह महतीति। महती श्रेष्ठा प्रसक्तिरिति। यत्र धर्मविरुद्धं पापं प्रसक्तं तत्र धर्मस्यावमानना धर्महानिर्वा प्राधान्येन प्रसज्येत प्रसक्ता भवति। अतः पापप्रसक्तिर्यथा न भवेत्तथा यतितव्यम्। अन्यथा महादुरितपङ्के मनुजकुञ्जरो निमज्जत्येव। 'वृहद्विशालं पृथुलं महत्' इत्यमरः। मह पूजायाम्। 'वर्त्तमाने पृषद् महत्' इत्यौणादिकात् साधुः ॥ ३१ ॥

लोके मतिमतां श्रेष्ठत्वमाह लोके इति। लोके भुवने जनसमूहे। यः प्रशस्तः कर्मदक्षो महामतिः सः पुमान् धीमान् इति। सर्व्वत्र मतिमत्त्वं हि प्राधान्ये कारणम्। यतः 'भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः' इति विद्वन्मतम्। श्रेष्ठा इत्यर्थः। अन्यत्रोक्तं नीतिनिपुणैः 'बुद्धिर्यस्य गरीयसी स बलवान् स्थूलेषु कः प्रत्ययः'। 'शस्तं क्षेमे प्रशस्ते च' इति हैमः। प्रकृष्टं शस्तः। शंस स्तुतौ, प्रपूर्वात्ततः क्तः। मतिमान्, मतिर्बुद्धिर्विद्यतेऽस्येति मतुप् ॥ ३२ ॥

सज्जन-गर्हिते न प्रसज्येत ॥ ३३ ॥

उपस्थित-विनाशः प्रकृत्याकारेण कार्य्येण लक्ष्यते ॥ ३४ ॥

---

साधुजननिन्दितकार्य्यप्रवर्त्तनमाह सज्जनेति। सज्जनाः साधवः। बहवो विद्वांसो वा। तेषां गर्हिते विगीते निन्दिते वा कर्मणि। पन्थो हितेच्छुर्मानवो न प्रसज्येत। नैव तत्र निरतो भवेत्। तथा च स्मृतौ—

"विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमिच्छति"॥

तत्रैव च, 'अकुर्वन् विहितं कर्म निन्दितञ्च समाचरन्। प्रसज्जं चेन्द्रियार्थेष्विति'। अन्यधर्मशास्त्रे पुष्कलमस्ति। गर्हिताचरणे समाजेषु दुर्नीतिर्वर्द्धते। तद्वर्द्धने ततोपद्रवः स्यात्। सन् शिष्टोजनः सज्जनः। 'सभ्य-सज्जन-साधवः' इत्यमरः॥ ३३॥

वर्त्तमानकार्य्यस्य भविष्यति हानिर्ज्ञातुमाह उपस्थितेति। उपस्थितानां वर्त्तमानावस्थां प्राप्तानां विषयाणां, यो विनाशः समुच्छेदो हानिश्च। यद्वा सम्प्रति यो नाश, तस्य प्रकृत्याकारेण विषयस्वरूपेण कार्य्येण तद्व्यापारेण वा लक्ष्यते दृश्यते। सा-ऽप्यनुमीयते। अत एव वस्तुन. सत्वे धर्महानिश्च कार्य्यं यथा न प्रसरति तथैवावस्थातव्यमिति ,पूर्व्वानुषङ्गः। प्रकृतिराकारः। आकारः समुदाचार-स्वरूपम्। अन्यत् कार्य्यस्य पूर्वचिन्तया-

**आत्म-विनाशं सूचयत्यधर्म-बुद्धिः ॥३५॥**

**नास्ति पिशुनवादिनो रहस्यम् ॥ ३६ ॥**

---

नागतचिन्तया च सम्प्रति दर्शनेनापि अनुमेयम्। स्त्या गतिनिवृत्तौ, स्त्यायते। ततः क्त प्रत्ययेन सिद्धम्। नश अदर्शने, विनशनं विनाशस्ततो घञ्। आकरणमाकारः करोतेर्घञ्। प्रक्रियते समाक्रियते उपस्थाप्यते यया सा प्रकृतिः तेन स्वरूपमत्र प्रकृतिः ॥ ३४ ॥

अधर्मबुद्धेः स्वस्यापि नाश कारणत्वमाह आत्मेति। आत्मनः स्वस्य वस्तु सत्वस्य वा। अधर्मबुद्धिः अधर्मजनकाकार्य्ये मतिः। सा सत्कार्य्यकर्त्तृज्ञानं समुच्छेदं वा सूचयति प्रकाशयति। यद्वा अधर्मसत्वस्य यथार्थम्यितवस्तुनश्च विरोधिनी बुद्धिः। सा निजस्य विनाशं प्रकटयति किमुतान्यस्य। अतोऽधर्मबुद्धिः नाशपर-म्भाय भवति। तदुक्तं—

"अधर्मेणैधते राजन् ततो भद्राणि पश्यति।
ततः सपत्नान् जयति समूलस्तु विनश्यति॥"

अन्यत्र लौकिके धर्मबुद्धिपापबुद्धी, कथायां व्यक्तमस्ति। 'विनाशः स्याददर्शनम्' इत्यमरः। नश अदर्शने, विनाशनम्। ततो घञ्। 'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मति'रित्यमरः। बुध्यते बोधनं वा अनयेति ततः क्तिन् ॥ ३५ ॥

स्वान्यपक्षमर्मान्वस्य रहस्य स्थाने पाठमाह नेति। पिशुनवादिनो दुर्जनस्य। 'पिशुनाः खलाः सूचकाः।' स एव वादिनो

## पररहस्यं नैव श्रोतव्यम् ॥ ३७ ॥

---

वक्तारः । तेषां रहस्यं गोप्यम् । किमपि नास्ति । तेषां तादृश एव स्वभावः, यतः परदोषाविष्कारणे तत्परत्वेन रहस्य विषयज्ञाने ते निपुणा भवन्तीति । बहुधा मन्त्रियापि परदोषमाविष्कुर्वन्ति । अतः धूर्त्तानां किमपि गोपनीयं नास्ति । मतिमान् तेषां सविधे रहस्यं नैव प्रकाशयेत् । 'शठः पिशुनो दुर्जनः खलः' इत्यमरः । वद् व्यक्तायां वाचि । वदनम् । ततो घञ् । वादोऽस्यास्तीति वादी तस्य । पिश, अवयवे, पिंशति । 'क्षुधि पिशिमिथिभ्यः कित्' इत्युनन् । नतु वाहुलकादुनन्, औणादिकसूत्र सत्वात् । 'रहस्या स्त्री नदीभेदे गोपनीयेऽभिधेयवत्' इति मेदिनी । रहो गोपने भवम् रहस्यम् । 'दिगादित्वाद् यत्' ॥ ३६ ॥

पररहस्य श्रवणे मानस क्रोधाद्युद्रेकात्तन्निषेधमाह परेति । परस्यान्यस्य रहस्यं गोपनीयं वृत्तान्तं नैव श्रोतव्यम् । तादृशरहस्य श्रवणे बुद्धे र्हीनता परिवर्द्धते । दुष्प्रवृत्तिरपि विषयविशेषे अपरिहार्य्येति । 'परः श्रेष्ठारि दूरान्योत्तरे क्लीवन्तु केवले' इति मेदिनी । पृ पालन पूरणयोः । पिपर्त्ति, पूर्य्यते अनेन वा । ततः पचाद्यच् । यद्वा 'ऋदोरप्' । 'पुंसि करणे' च प्रत्ययर्थेति । रभसोऽपि 'रहो निधुवनेऽपि स्याद्रहो गुह्ये नपुंसकम्' । रह त्यागे, असुन्, तेन रहस । रहो भवं रहस्यम् । दिगादित्वात् यत् ।

**वल्लभस्य कातरत्वमधर्मयुक्तम् ॥ ३८ ॥**

**स्वजनेष्वति कामो न कर्त्तव्यः ॥ ३९ ॥**

---

अन्ये तु परस्य गम्भो रहस्यस्य गुह्यं हृद्गतमप्रकाश्यं यशादित्याहुः । नीतिविदस्तु अन्यदीय गुह्यविषयमनुमाय प्राक् प्रकाशनं रहस्यभेदमित्यूचुः ॥ ३७ ॥

स्वामिनः कातरत्वस्यानौचित्यप्रख्यापनाय यद् धर्मविरुद्धमाह वल्लभस्येति । वल्लभस्य प्रभोः स्वामिनः गुरोर्वेति यावत् । तस्य कातरत्वं दैन्यं कार्पण्यञ्चेति । तदधर्मयुक्तम् । अधर्मान्वितम् अयोग्यत्वसूचकमतः पापान्वितमिति । यथा क्षत्रियस्य रणभीरुता । यथा च 'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते' इति गीतायाम् । तथैव च 'क्लैब्यं मास्मगमः पार्थ ! नैतत्त्वय्युपपद्यते' । एवञ्चाभ्युन्नतिकरस्वकार्यसाधने दैन्यं सर्वस्य सर्वथा गर्हितमिति । अपरञ्च यस्तु वल्लभः [illegible] योग्यकार्येषु शक्तिमान् भवेत्, नान्यमतः । तादृशत्वे कार्यहानादधर्मश्च स्यात् । 'वल्लभो दयितेऽध्यक्षे सल्लक्षण तुरङ्गमे' इति विश्वः । वल्ल संवरणे, वल्लते । 'रभिवल्लिभ्यां च' इत्यौणादिकादभच् । 'अधीरे कातरः' इत्यमरः । तॄ प्लवनतरणयोः । ईषत्तरति । ततः तरते रच् । ईषदर्थे [illegible] कोः कादेशः ॥ ३८ ॥

स्वजनेषु धनातिस्पृहाऽनिष्टजनकत्वेन निषेधमाह स्वजनेष्विति । स्वस्यात्मनो जनाः परिवाराः ज्ञातय इति यावत् ।

## मातापि दुष्टा तक्तव्या ॥ ४० ॥

तेषु जनेषु अतिकामो अत्यभिलाषः स्वार्थार्थं न कर्त्तव्यः। मच विधातव्यः। तेन ते विरक्ता द्वेषिणोवा स्युः। द्वेष्टारः सन्तोऽवश्यमनिष्टमाचरन्ति। यत्र स्वार्थाभिलाषाधिक्यं तत्रैव विवाद सम्बन्धच्छेदौ भवतः। 'अतिक्रमः' इति पाठेतु अतिक्रमोलङ्घनं उपास्ययो न कार्य्यं इत्यर्थः। 'अतिक्रमोऽत्यये क्लृप्तेऽत्युत्पाते नागदण्डयोः' इति धरणिः। 'कामः स्मरेच्छयोः पुमान्, इत्यमरः। कमु कान्तौ, काम्यते। घञा सिद्धम्। अतिक्रमणमतिक्रमस्ततोऽतिपूर्व्वात्क्रमेर्घञ्। तथा कमेः स्मरार्थे तु काम्यतेऽनेनेति 'पुंसिसंज्ञायाम्' इति घः ॥ ३८ ॥

'आत्मविनाशहेतुत्वे' मातुरपि त्यागमाह मातेति। माता प्रसूतिः। यद्यपि सा प्रसूतिर्दुष्टा आततायिनी समपकारिणी सती। त्यक्तव्या दूरे स्थातव्या। न तु सम्बन्धात् च्युता भवति सम्बन्धस्य ध्रौव्यात्। अत्र त्यागपदेन दूरावस्थितिरेव ज्ञेया। सान्निध्येऽवस्थानेऽपकृति-सम्भवात्। अत्रापिशब्दादन्येषां त्यागे शङ्कावतारोनास्त्येवेति सूचितम्। हिताहितविवेकशून्यस्य गुरोस्त्यागमाह, तथाच 'गुरोरप्रतिपन्नस्य कार्य्याकार्य्यमजानतः। उत्पथप्रतिपन्नस्य परित्यागो विधीयते'। एवन्त्यागः स्थाना-न्निर्व्वासनं वा, न तु दैहिकवधादि। तथा गुरूणा 'वधोनास्तीति दैहिक.' इति महाभारत-निषेधात्। एतत्तु नीतौ। धन्यधर्म्म-विषये ज्ञेयम्।' 'माता गौर्दंगा जननी मही'ति हेमः। मान

स्वहस्तोऽपि विषदिग्धश्छेद्यः ॥ ४१ ॥

परोऽपि च हितो बन्धुः ॥ ४२ ॥

---

पूजायाम्, मन्यते। मा माने च, माति गर्भोऽस्यामिति। 'मस् नेष्टृ' इत्याद्योणादिकातृचा साधुः ॥ ४० ॥

विषाक्रान्तस्य स्वहस्तस्य प्राणनाशकत्वे च्छेदनमाह स्वेति। स्वस्यात्मनः। हस्तः करः पाणिरिति। विषेण गरलेन भुजगदष्टेन च। यद्वा ताड्य भीषण रोगेन। दिग्धः तेन दग्धः विषाक्रान्तः। प्रसच्छेद्य शीघ्रमस्त्रादिना भेद्यः कर्त्तनीयश्च। 'विषाक्ते दिग्ध लिप्तकौ' इत्यमरः। 'दिग्धो विषाक्तबाणे स्यात् पुंसि लिप्तेऽन्यलिङ्गकः' इति मेदिनी च। 'पङ्गुलीयोरगक्षता' इति कविसमयः। का कथा परहस्तच्छेदे स्वहस्तस्यापि च्छेदः समुचितः। तच्छेदे शरीरप्राणरक्षा सम्भवति। सूत्रमदः पूर्व्वसूत्रस्य दृष्टान्तपरम्। दिह उपचये. दिह्यते। दिहेः क्तः ॥ ४१ ॥

परोऽपि हितकारित्वे बन्धुत्वमाह पर इति। परः स्वेतरः अबन्धुरनात्मीयः। हितो हितकारो उपकारकः। कार्य्यकालेऽसुहृदपि यः सुहृद्रूपेणोपकरोति सोऽपि च बन्धुर्मित्रम्। तथाचोक्तं राजनीतौ 'परोऽपि हितवान् बन्धुः। बन्धुरप्यहितः परः। अहितो देहजो व्याधिर्हितमारण्यमौषधम्'। एवञ्च सुधीजनः असुहृदपि ग्राह्यः। मूढो दुर्मतिः सुहृदपि

## कक्षादप्यौषधं गृह्यते ॥ ॥ ४३ ॥

---

गृह्णीयः । हितः पथ्यम् । हितमुपकृतिरस्यास्तीति अर्श आदित्वादच् । 'बन्धुर्मातृबान्धवयोः' इति हैमः । पारिभाषिकबन्धुस्तु —'त्यागसहनोबन्धुः सदैवानुमतः सुहृत्'इति । दधातेः क्त प्रत्ययः । बन्ध बन्धने, बध्नाति । 'शृस्वृस्निहि' इत्यादौणादिकादुः ॥ ४२ ॥

प्रयत्न-साध्यत्वाद् गृहकक्षादपि औषधग्रहणमाह कक्षादिति कक्षादालयाद् गृहप्रकोष्ठादतिशान्निध्यादपि किमु सुदूरादरण्यादेः । औषधं भैषज्यं गृह्यते स्वाक्रियते । 'कष्टादिति' पाठेतु । कष्टात् मर्षात् तुमाहादपि इत्यर्थो भविष्यति । न तदर्थः परं रुचिकरः । औषधस्य जीवनदायकत्वात् । 'कक्षः कर्षे तृपे चक्रे प्रकटव्यवहारयोः । आत्मत्रे पामके चाथ तुल्ये सौवर्चलेन्द्रिये' इति विश्वः । एवमेव मेदिनीकृदाह यथा 'रुद्राक्षैरामयी सर्वे बिभीतकतरावपि । चक्रे कर्षे पुमान् क्लीवं तुल्ये सौवर्चलेन्द्रिये' । 'कक्षः स्मृतो भुजामूले कक्षोऽरण्ये च वीरुधि' । 'कक्षः शुष्कटणे प्रोक्तः कक्षः कच्छ उदाहृतः । कक्षासदृशपदे काञ्च्यां रथगेह प्रकोष्ठयोः' इति धरणिश्च । कक्षः, कष हिंसायाम्, कषति । 'वृत्रू वदि हनि कमि कषिभ्यः स' इति सागमः । अच् व्याप्तौ, अचति । ततः पचाद्यच् । 'अजातो सर्व्वमौषध' मित्यमरः । द्रव्यमात्रविवक्षायां औषध

नास्ति चोरेषु विश्वासः ॥ ४४ ॥

अप्रतीकारेषु व्यसनेषु अनादरो न कर्त्तव्यः ॥४५॥

---

शब्दप्रयोगो दृश्यते । ओषधेरिदम् । 'ओषधेरजातौ' इत्यण् । अन्याश्च फलपाकान्ता ओषध्यो भवन्ति । वैद्यके तु वटिका-घृत-तैलासवारिष्टावलेह-चूर्ण-भस्मिका प्राश-प्रलेप-पाचनादीना-मौषधशब्दवाच्यत्वम् ॥ ४३ ॥

अत्रेति द्रव्यापहरणस्वाभाव्याच्चोरेषु विश्वासाभावमाह नेति । चौरेषु तस्करस्तेयकारकपाटच्चरेषु विश्वासो निश्चय-प्रत्ययः । नास्ति न विद्यते । चोर-दस्यु-दुष्टेषु च कृते विश्वासे महानिष्टं स्यादिति भावः । तेषां आत्मलाभाय विवेकाभावो विश्वासाभावे हेतुः ।

'चौरः पाटच्चरेऽपि स्याच्चौरपुष्पौषधावपि' । इति विश्वः । 'मानसनिश्चय विश्रम्भ-विश्वासाः' । 'समौ विस्रम्भविश्वासा'वित्य-मरः । 'श्वस् प्राणने' विश्वसनमिति विपूर्वात् श्वसधातोः घञ् । चुर स्तेये, चोरणम् 'अप्रत्ययात्' संज्ञापूर्व्वकत्वान्न गुणः । चौरेति पाठे प्रज्ञाद्यणा सिद्धः । चुरा शीलमस्य 'छत्रादिभ्यो णः' ॥४४॥

अप्रतीकार्यो व्यसनः सोऽस्य इत्याद्यप्रतीति । व्यसनेषु विपज्जनकदोषेषु अष्टादशप्रकारेषु च । अप्रतीकारेषु अप्रति-समाधानेषु वैरनिर्यातनायोग्येषु वा । अनादरोऽश्रद्धा ईर्षा परिभवो वा । न कर्त्तव्यो नैव विधेयः । यद्यपि समुपस्थितेषु व्यसनेषु प्रतीकर्त्तुं न शक्यते तदा तदर्थं समधिकोद्यमः कार्यः,

कस्यचिदर्थं स्वमिव मन्यते साधुः ॥५४॥
परविभवेष्वादरो नैव कर्त्तव्यः ॥ ५५ ॥

---

सज्जनस्य स्वार्थपरार्थयोर्व्याघाते तुल्यप्रतीतिमाह कस्यचिदिति। कस्यचिज्जनस्यार्थं धनम्। साधुः सज्जनो महाजनो महामतिरिति यावत्। स्वमिवात्मन इवेदं परकीयं वस्तु विनश्यतु इत्थं मतिर्माभूत्। यथा स्वार्थहानौ दुःखं तथा परार्थहानावपीतरस्य दुःखं भवेत्। साधूनां विषये इत्थं स्वपरभेदाभावः। तदुक्तम्

"अयं निजःपरोवेति गणना लघुचेतसाम्"।

अपरञ्च "आत्मवत् सर्वभूतेषु यः पश्यति स पण्डितः"। असाधुस्तु स्वस्मात् परकीयद्रव्यं भिन्नं मत्वा तद्धरणव्याघातादौ प्रवृत्तः स्यादिति। 'स्वः स्यात् पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीये-ऽस्त्रियां धने' इति मेदिनी। स्वन शब्दे स्वनति। 'अन्येभ्योऽपि दृश्यते' इति वार्त्तिकात् डः। 'साधुर्वार्धुषिके चारौ सज्जने चाभिधेयवत्' इति मेदिनी। साध संसिद्धौ, साध्नोति धर्मं हितं वा। 'कृवा पा' इत्यादौणादिकादुण्॥ ५४॥

लोभापहरणादिभयात् परसम्पत्तिषु अत्यादरनिषेधमाह परेति। परेषामन्यजनानां विभवेषु धन-सम्पत्तिषु आदरः आग्रहो लोभो नैव कर्त्तव्यः। यतस्तेष्वत्यादरेण लोभो विवर्द्धितुं शक्यते। तस्मादपहरण-व्याघातेच्छापि सम्भविष्यति तेन पापञ्चेति। परन्तस्य सौहित्यबुद्धा समादरकरणे दोषाभावः।

## परविभवेष्वादरो विनाश-मूलम् ॥ ५६ ॥
## पलालमपि परद्रव्यं न हर्त्तव्यम् ५७ ॥

---

तदुक्तं लघुचाणक्ये 'परद्रव्येषु लोष्टवत्' इति। मानवनीतौ च 'परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम्' इत्यनिष्टजनकत्वमुक्तम्। 'विभवो धननिर्वृत्योः' इति हैमः। विपूर्वाद् भवतेः रपा विभव इति साधुः। 'आदृतौ सादरार्चितौ' इत्यमरः। दृङ् आदरे, आद्रियते। ततोऽप्॥ ५५॥

परद्रव्ये लोभनिषेधमुक्त्वा सम्प्रति तस्य विनाश-पापजनकत्वेन विनाशहेतुत्वं वक्ति परेति। परस्य विभवे धने ऐश्वर्य्ये वा समादरोऽत्याग्रहः। आत्मनो विनाशस्य मूलं हेतुः। तथा चोक्तं कविना—

"यदयशोदं न हि तत् परेषाम्"।

इति विज्ञाय मतिमान् सुखं तिष्ठेत्। एवं परदारेष्वपि विज्ञेयम्। परदारार्थं रावणदुर्य्योधनकीचका विनष्टाः। शिष्टं प्रागुक्तम्। 'मूलं शिफाद्ययोः'। 'मूलविस्तेऽन्तिके ना भे' इति मेदिनी। मूल प्रतिष्ठायां, मूल रोहणे वा, मूलति। इगुपधत्वात् कः॥ ५६॥

अतिक्षुद्रमपि यत् परद्रव्यं तद्हरणे परानिष्टाभावेऽपि न सहर्त्तव्यमित्याह पलालेति। पलालं निष्फलं धान्यं शुष्ककाण्डं

## परद्रव्यापहरणमात्मद्रव्यविनाशहेतुः ॥ ५८ ॥

## न चौर्यात् परं मृत्युपाशः ॥ ५९ ॥

वा। तद्वदसारं परद्रव्यं तुच्छं वस्तु मत्वा न स्पर्शनीयम्। नैवापहरणीयम्। ततो यत्किंचिदपि परकीयं वस्तु तदननुमत्या न संग्रहणीयादिति भावः। 'द्रव्यं भव्ये धने क्ष्मादौ' इति हैमः। द्रविः, 'द्रव्यञ्च भव्ये' इति साधु। प्रागुक्तमन्यत्। 'पलालोऽस्त्री स निष्फलः' इत्यमरः। धान्यरहितकाण्डः पलालम्। पल गतौ, पलति। 'तमिविशिबिडि' इत्यादिना कालन्। यद्वा पलमलति। अल भूषणादौ। तस्मादण्। द्रव्यविशेषणात् क्लीबत्वम्। पुंस्त्वमन्यथा॥ ५७॥

; येन मन्दमतिना लोभात् प्रमादाद्वान्य-द्रव्यापहरणं क्रियते तस्यात्मनाशकारणमाह परेति। परेषां गुर्वादीनां सर्वेषां मध्ये-पाद्य। यद् द्रव्यापहरणं तत् स्तेयकरणम्। तत्कर्त्तुरात्मनः विनाशः प्राणादेः संहारः। तस्य हेतुः कारणम्। यद्वा द्रव्य-स्वाम्यस्वामित्वविशिष्टवस्तुनः। यदपहरणमस्यात्मनः स्वस्य द्रव्यस्य विनाशस्य। विनाशस्य ध्वंसस्य हेतुः कारणं ज्ञेयमिति। अतो बलात् प्रमादा द्वान्यद्रव्यस्तेयकरणरूपावैधकर्मा न विधेयम्। 'द्रव्यं स्याद् द्रविणे भव्ये पृथिव्यादौ' इति विश्वः। 'अपहारस्त्वपचयः' इत्यमरः। अपचयोऽपहरणमत्र॥ ५८॥

चौर्यस्य यमपाशतुल्यत्वमाह नेति। चौर्यात् स्तेयकरणात् परं श्रेष्ठमधिकमिति। मृत्योर्यमस्य मृतेर्वा पाशः मत्स्यनरज्जू-

यवागूरपि प्राणधारणं करोति काले ॥ ६० ॥

नास्ति। यथा हि यमपाशेन निधनसमये तद्भटेन मृतप्राणाः नीयन्ते। तद्वच्चौर्य्यापराधेन राजपुरुषैर्नीयते। परमस्याधिक्यं यमपाशैर्वारमेकं नीयते चौर्य्यापराधेन प्रतिवारं बद्धा नेतुं शक्यते। अतोऽस्य ज्येष्ठत्वम्। चौर्य्यापराधे यशोधननिरयेनाशः शारीरिककष्टं कारान्नयभोगश्चेति विदितमस्ति सर्वेषाम्। यमपाशश्च—

"ततः सत्यवतः कायात् पाशबद्धं वशङ्गतम्।
अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्" ॥

इति भारते। काठकश्रुतावपुक्तम् 'स मृत्युपाशान् पुरतः' इति। 'स्तेयं स्तैन्यञ्च चौर्यं स्याच्चौरिका चौरिकाऽस्त्रियाम्' इति वाचस्पतिः। चौर्य्यापराधे दण्डविधिरस्यार्थशास्त्रेऽस्ति। चोरस्य कर्म चौर्य्यम्, ततः ष्यञ्। मृत्युः। मृङ् प्राणत्यागे, म्रियते। 'भुजिमृङ्भ्यां युक्त्युकौ' इति त्युक्। 'पाशस्तु मृगपक्ष्यादिबन्धने' इति हैमः। पश बन्धे, पाशयति, चुरादौ। ततो घञ् ॥ ५९ ॥

समये अतिक्षुद्रमनुनापि जीवनधारणं सम्भवति तदाह यवागूरिति। यवागूर्लप्सिका रोगि-पथ्यविशेषः। सा तु क्षुद्रा अल्पा अपि काले रोगपरीभूत शरीरे अन्नाभावसमये वा। प्राणधारणं लोकानां जीवनरक्षणं करोति। अतः क्षुद्रोऽपि कालेमहोपकारसाधनं विदधाति। तत्र हेयबुद्धिं न कुर्य्यात्। यद्वा

## न कालेन मृतस्यौषधं प्रयोजनम् ॥ ६१ ॥

लोकानां यवाग्वा प्राणधारणसम्भवे । किमर्थं प्राणविघातक-तुल्यकर्म्मणा चौर्य्येण । तदुक्तं नीतिविद्भिः—

"स्वच्छन्दवनजातेन शाकेनापि प्रपूर्य्यते ।
अस्य दग्धोदरस्यार्थे कः कुर्य्यात् पातकं महत्" ॥

राजवल्लभेऽप्युक्तं—

"यवागूर्ग्राहिणी बल्या लघ्वी वस्तिविशोधनी ।
अतिसारे ज्वरे दाहे हिता वह्निप्रदीपनी" ॥

'यवागूरुष्णिका श्राणा विलेपी तरला च सा' इत्यमरः । यु मिश्रणे, यौति, यूयते वा । 'स्र युवचिभ्योऽन्यूराग्जन्नु चः' इत्यनेनागूच् ॥ ६० ॥

योग्यकाले मृतस्य मृतेः प्रागौषधसेवन-प्रयोजनाभावमाह नेति । कालेन योग्य वार्द्धक्यसमयेन मृतस्य निधनार्हस्य लोकस्य । औषधप्रयोजनं भैषज्यावश्यकत्वं नास्ति । तदा तु भैषज्यं नैवानुकूल्यमाचरति, न तेन रोग उपशाम्यति नियतेः प्राबल्यात् । तदुक्तमभियुक्तैः 'प्राप्तकालो न जीवति' इति । वैद्यके च—

"नाऽकाले म्रियते कश्चिन्नास्ति मृत्युरकालजः ।
यो यस्मिन् म्रियते काले मृत्युकालः स तस्य हि" ।

'न मृतस्यौषधं प्रयोजनम्' इत्यं पाठे मृतस्य प्राणरहित-स्यौषधेन किं प्रयोजनं तन्निष्फलमिति । कालेनेति 'प्रकृत्यादिभ्य-

**स्वकाले स्वल्पमपि प्रभूतत्वस्य प्रयोजनम्भवति ॥ ६२ ॥**

---

उपसंख्याने' तृतीया । यद्वा विवक्षातः सप्तम्यर्थे तृतीया । 'भिषजौषधभैषज्यानि' इत्यमरः । ओष: प्लोषो दीप्तिर्वा धीयते अत्र इति दधातेः 'कर्मण्यधिकरणे च' इति किः । एवं 'कृ दिकारादिति' ङीपि दीर्घत्वम् । यद्वा ओषधेरिदम् । 'ओषधेरजातौ' इत्यनेनाण् । 'मृतं मरणे याचिते च' इति हैमः । मृङ् प्राणत्यागे, म्रियते । 'गत्यर्था' इत्यादिना क्तः ॥ ६१ ॥

योग्यकाले स्वल्पमपि वस्तु तत् प्रचुरस्य साधकं भवतीति आह स्वेत्यादि । स्वस्य कर्मणः काले समये स्वल्पमपि अतिलघ्वपि वस्तु प्रयोजनमुद्देश्यमभीष्टं वा प्रचुरत्वं साधयति । अकाले तु पुष्कलमपि द्रव्यं वृथा भवति । यथा क्षुधितस्य स्वल्पभोजनमपि श्रेयः । बुभुक्षा विरहितस्यात्युपादेयवस्तुभोजनमपि वृथेति । यद्वा सति सुचिकित्स्ये रोगे औषधबिन्दुरपि उपकरोति । अचिकित्स्ये पुष्कलमपि भेषजं नोपकरोति । 'स्वकाले स्वल्पमपि प्रभुत्वस्य प्रयोजनं भवतीति' पाठभेदे एकस्मिन् समये प्रभुत्वस्यावश्यकत्वमित्यर्थः । भप भूषणादौ, भप्यते, वार्यते । 'बाहुलकात् घः' । 'प्रभूतं प्रचुरं प्राज्यं' इति हैमः । प्रभवति स्मेति प्रपूर्वाद् भवतेः 'गत्यर्था' इत्यादिना क्तः । ततस्तस्य भावः प्रभुतत्वम् ॥ ६२ ॥

## विशेषज्ञं स्वामिनमाश्रयेत् ॥ ७२ ॥

लोभपराथणं सेवते अनुवर्त्तते यः स लुब्धसेवी, यद्वा लुब्धस्य सेवा अस्यास्तीति लुब्धसेवी । स पावकेच्छया अनलाशया, खद्योतं ज्योतिरिङ्गणं धमति समुद्दीपयति । वह्निलाभे वञ्चितः सन् विफलमनोरथो भ्रान्तेर्भवतीति । तदुक्तं विदग्धैः—

'हीनाश्रयो न कर्त्तव्यः कर्त्तव्यो महदाश्रयः' ।

कविसमयश्च 'उपासना वेन्महतामुपासना' । पूर्वसूत्रोक्तविषय-समर्थनमनेनोदाहरणमुखेन छतम् । अतः शक्तिमद्यावतः प्रभोराश्रयः कार्यः । 'खद्योतो ज्योतिरिङ्गणः' इत्यमरः । लुभ गार्द्धे, लुभ्यति । 'गत्यर्था' इत्यादिना क्तः । खे आकाशे द्योत्यते । द्युत दीप्तौ, अचा सिद्धम् । यद्वा खं द्योतयतीव, अण्-प्रत्ययेन जातम् ॥ १३१ ॥

पूर्व्वसूत्रस्य तात्पर्य्यप्रदर्शनमुखेनोपयुक्तस्याश्रयमाह विशेषज्ञ-मिति । विशेषज्ञ प्राज्ञं निपुणमिति यावत् । स्वामिनं प्रभुम् । आश्रयेदनुसरेत् सेवेतेति । तादृश-स्वामिन-सेवया मनोरथः पूर्त्तिं गमिष्यतीति नात्र शङ्कावसरः । तत्सन्नम् अविवेकिनं प्रभुमनुवर्त्तेत । तदालि कार्य्यनैष्फल्यात् । विशेषं जानातीति, ज्ञा अवबोधने, इत्यस्मात् 'आतोऽनुपसर्गे' इत्यनेन कः । 'स्वामी-त्वीश्वरः पतिरीशिता' इत्यमरः । स्वमस्यास्तीति स्वामिन् । 'स्वामिन्नैश्वर्य्ये' इत्यादिना साधुः ।

'विशेषज्ञः प्रवीणश्च निपुणो दक्ष इत्यपि' ।

इति धरणिः ॥ ७२ ॥

## न नीचोत्तमयोर्विवाहः ॥ ७५ ॥

---

विन्दुरबीजः शक्तिः । नापि शैवदर्शनशारदातिलकोक्त-विन्दुरिति । नवा वार्ग्यादिकणा । कुत्रचिदादर्शे सूत्रयोरनयोरेकपदे पाठोऽस्ति । तादृशपाठेऽपि पर्यकाठिन्यं नास्ति । अन्यद् वैद्यकेऽनुसन्धेयम् । पुरुषपदनिरुक्तिः प्रागुक्ता । 'ब्रह्मचर्य-प्रतिष्ठायां वीर्यलाभः' इति योगसूत्रम् । ब्रह्मचर्यमष्टाङ्गमैथुन-परिहारः । तेन वीर्यवान् मेधावी शक्तिमान् आयुष्मांश्च भवति । 'सम्बन्धे सुरते युग्मे रात्रौ मिथुनमिष्यते' इति व्याडिः । 'मिथुनस्य कर्म मैथुनम्' । ततः 'प्राणभृज्जाति' इत्यनादेशः ॥ ७४ ॥

विवाहमूलत्वात्सङ्गमस्य ततोऽसमयोर्विवाहं निषेधमाह नेति । नीचोत्तमयोर्हीनश्रेष्ठयोः कुलीनाकुलीनयोर्वा । विवाह उपयमः । स च शोभमानः हितकरश्च न भवतीति । तदुक्तं विदुरैः 'विवाहश्च विवादश्च समयोरेव शोभते' । यथा पयसा पयोयोगः शोभनः । न तथा दुष्ट-वारिणा पयोयोगः । तद्वत् समयोर्विवाहो न विषमयोः । धर्मशास्त्रकारैरप्युक्तम् 'सदृशः सदृशीं भार्यां विन्देत' । सादृश्यमत्र वयो रूप-गुण-जाति धर्म शीलानामिति । यदुक्तं 'स्त्रीरत्नं दुष्कुलादपि' इति । सा यदि रत्नभूता स्यात्तदा दुष्कुलादपि ग्राह्येति, लोके तादृशी दुर्लभा । 'प्रधानं प्रमुखं प्रवेकानुत्तमोत्तमाः' इत्यमरः । उत्तम इति । तमु काङ्क्षायाम् उत्ताम्यति । उत्तम्यते वा । अथवा धत्रा वा सिद्धम् । किन्त्वातिशयेनोत्कृष्टः । उत्कृष्टार्थ-

अगम्यागमनादायुर्यशः पुण्यानि चीयन्ते ॥ ७६ ॥

त्रसेरच्छन्दस्त्वमप्। द्रव्यप्रकर्षार्थेलामासः स्यात्। यद्दा प्रापणं, विशिष्टं वहनम् विवाहः। स च घञा सिद्धः। वैशिष्ट्यन्तु वैध-पतित्वपत्नीत्वव्यापक शास्त्रीयनियमोत्थसंस्कारविशेषः। अन्य इत्यं-शास्ते ध्येऽतिःशास्ते चास्ति ॥ ७८ ॥

अनिष्टजनकत्वेन पुंसामगम्यागमने हानमाहागम्येति। अगम्या असङ्गमनीया मैथुनायोग्या धर्म्मशास्त्रे निषिद्धा दुहित्रा-दयः। तासां गमनादव्ययायकरणात्। आयुर्जीवनकालः। यशो लोकेषु ख्यातिः, पुण्यं धर्म्मेण सुकृतिः। एतानि पुंसः चीयन्ते विनश्यन्ति।

"अतिप्रमाथेन्द्रियाणां नरः पतनमिच्छति"। इति स्मृतिः। एषां नाशादात्मनोऽपि नाश सम्भाव्यते। ततोऽगम्यागमनं सर्व्वथा परिहर्त्तव्यम्। अगम्या यथा, यमस्मृतौ—

"या याऽगम्या शृणामेव निबोध कथयामि ते।
स्वस्त्री गम्या च सर्व्वेषामिति वेद-निरूपिता॥
अगम्या च तदन्या या इति वेदविदो विदुः।
शूद्राणां विप्रपत्नी च विप्राणां शूद्रकामिनी॥
अत्यगम्या च निन्द्या च लोके वेदे प्रतिष्ठिते।
गुरुपत्नीं,राजपत्नीं सपत्नीं मातरं प्रसूम्॥
सुतां पुत्रवधूं,श्वश्रूं सगर्भां भगिनीं सतीम्।
सोदर-भ्रातृजायाञ्च भगिनीं भ्रातृकन्यकाम्॥

## नास्त्यहङ्कार-समः शत्रुः ॥ ७७ ॥
## संसदि शत्रुं न परिक्रोशेत् ॥ ७८ ॥

शिष्यास्त्र शिष्यपत्नीच भागिनेनस्य कामिनीम्।
भ्रातृ-पुत्रप्रियाश्चैता त्यगम्यामाह पद्मजः" ॥
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे। आयुः। इण् गतौ, एति। एतेर्णिच्चेत्यनेनोसिः। शत्रः। अश व्याप्तौ, अश्नुते व्याप्नोति। 'अशेर्देवने युट् च' इत्यत्तन्। 'पुण्यन्तु सुकृते। सुन्दरे पावने धर्म्मे' इति विश्वः। 'पुनो यण् णुक् ह्रस्वश्च' इत्युणादितो यत् णुक् ह्रस्वश्च ॥ ७६ ॥

अभिमानस्य शत्रुतोऽपि भीषणत्वानिष्टकारित्वे आह नेति। अहङ्कारो गर्व्वोऽभिमानः। स च मत्तः श्रेष्ठो नास्तीति ज्ञानम्। यद्वा आत्मन उद्बोधिकरणम्। तेन समस्तुल्यः भुवने शत्रुरपरोन विद्यते। अहङ्कारेण गर्व्विता लोका विवेकाभावाद् मत्त इवाविधाचरणं कृत्वा, स्वपरानिष्टं विधाय च काले विनश्यन्ति। यथा वेण-दुर्य्योधन रावणाः। अन्यच्चोक्तं कौटिल्यैः

न च व्याधिसमः शत्रुः न च दैवात् परं बलम्।
न चापत्यसमः स्नेहो नाहङ्कारात् परो रिपुः" ॥

तस्य निवृत्तौ च परमनिर्वृतिः सांख्यभाष्ये उक्ता। तथा च 'सर्व्वाभिमान-निवर्त्तनतोऽस्य मुक्तिः'। शत्रुर्वहि.स्थितोऽनिष्टं साधयति। अभिमानश्चान्त.स्थः सविति। स्वाभिमानेन अन्ये ये प्रतिशेरते, ते पुनः शत्रवः सन्तः प्रतिहिंसन्तीति निश्चितम्।

शत्रु-व्यसनं श्रवण-सुखम् ॥ ७९ ॥

इति चाणक्यसूत्रे नीतिदर्शनाख्ये तृतीयोऽध्यायः ॥ ३ ॥

---

मन ग्लानौ, अभिमननम्। अभिपूर्व्वात् ततो घञ्। सुगममन्यत् ॥७७॥

परिषदि दैवात् शत्रोराक्रोशवदने निषेधमाह सभिदि। संसदि सभायाम्। शत्रुं वैरिसरातिं न परिक्रोशेत् नापि तस्य क्रोधोद्रेकं कुर्य्यात्। तं प्रति रोषं सुगुप्तस्तु न विदध्यात्। तत्र शाठ्याचरणोऽतीव रुष्टः सन् च्छिद्रानुसन्धाता भवेदिति भावः। सभायां सौजन्य-शिष्टाचारप्रदर्शनेन कार्य्यसौकर्य्यं भवति। तादृश एव नियमः सभ्यानाम्। 'सभा-संसत्-समिति-परिषदः'। 'स्त्रियां सामाजिके गोष्ठ्यां द्युतमन्दिरयोः सभा' इति रभसः। सम्यक् सीदन्त्यस्यां विद्वांसो विचार्य्यम्। षद्-विशरणादौ, सीदति। सम्पदादित्वात् क्विपा सिद्धम् ॥ ७८।

शत्रूणां विपद्वार्त्ताश्रवणे श्रवणत्प्तिर्जायते तदाह शत्रविति। शत्रूणां वैरिणाम् परातीनामिति। व्यसनं तेषां दुःखशोक-आपदः। तच्छ्रवणे आमनः व्यसनस्य श्रुतेः। सुखं प्रीतिकर-भावो जायते इति शेषः। तदात्वे चवायासैनानिष्टकारिणः शत्रोः विपत् सञ्जायते। स तया व्यसनी भवतीति वार्त्ता आपाततः शुभकरी। प्रवृत्ति-सरणि-समायितानामेषा रीतिः यत् सुहृदां शुभवार्त्ता अमित्राणां च दुःखवार्त्ता प्रीतिकरीति। निदर्शनं कोपादिकं प्रागुक्तम् ॥ ७९ ॥

# चतुर्थोऽध्यायः।

—०✱०—

## अधनस्य बुद्धिर्न विद्यते ॥ १ ॥

नीति-नीकर्णधारस्य कौटिल्यस्य महामतेः।
सूत्राणामाशुबोधाय टीका सारार्थबोधिनी ॥
इति दर्शनभूतचाणक्यसूत्रव्याख्यायां श्रीईश्वरचन्द्रशर्मशास्त्रि
कृतायां सारार्थबोधिन्यां तृतीयोऽध्यायः।

—०✱०—

तृतीयेऽध्याये सामान्यविशेषप्रकारेण मुख्यविषयान् प्रसङ्गागतविषयांश्चोक्त्वा सुहृद्व्यवहारश्चोपदिश्य सम्प्रति तुरीयाध्याये निर्धनस्यार्थचिन्ताव्याकुलचित्तस्य बुद्धिह्रासमाह अधनेति। अधनस्य दीनस्य निःस्वस्य चेति। बुद्धिर्धीर्मतिः। न विद्यते न प्रसरतीति। अर्थाभावचिन्ताव्याकुलतया नियतं बुद्धेर्मान्द्यात् प्रतिभा नश्यत्येव। 'बुद्धिर्मनीषा धिषणा धीः प्रज्ञे'त्यमरः। पुष्कल-विभवे सति, परिधान-पान-भोजन-चिन्ताराहित्येन क्षीर-नवनीत-हविर्भोजनेन च बुद्धेः प्राखर्यं सम्पद्यते। तथा च "सद्यभोजस्करं दुग्धम्"। 'तथा धी-स्मृतिमेधाग्निकारिणां शस्यते घृतम्'।

"नवनीतं हितं गव्यं हृष्यं वर्णबलाग्निकृत्"।

इत्यादि वैद्यके। दीनस्य तु सम्नोपयुज्यते धनाभावात्। अत्र मृच्छकटिके दैन्यवर्णने। यदनिरुक्तिः प्रागुक्ता ॥ १ ॥

## हितमप्यधनस्य वाक्यं न शृणोति ॥ २ ॥
## धनहीनः स्वभार्य्यया अवमन्यते ॥ ३ ॥

---

दैन्यात्तस्य हितोपदेशश्रवणेऽपि श्रोत्राणां वैमुख्यमाह हितमिति। अधनस्य निःस्वस्य दीनस्येति। हितं वाक्यं सदुपदेशमुपकारजनकं यदेतल्लोको न शृणोति नाकर्णयति। यतो दैन्याल्लोकस्य सामान्यदृष्ट्या निर्धनः तुच्छास्पदो भवति। अतस्तद्वाक्यं प्रियमिष्टमपि न शृणोति श्रुत्वा च हृदयेन नावधारयति। 'वाचकन्तु कुत्सिते हीने वचनार्थे च वाच्यवत्' इति व्याडिः। 'तिङ्सुबन्तचयो वाक्यम्' इति शाब्दिकाः। तिङन्तानां चयो यथा 'पचति पच' 'पचति भवति' पाको भवतीत्यर्थः। सुबन्तानां चयः। 'प्रकृतिसिद्धमिदं हि महात्मनाम्' इत्यादि। महाभाष्यकारमते अत्र 'भवति' इत्यध्याहारस्यावश्यकत्वाभावात् न वाक्यम्। अन्ये तु 'वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्त-पदोच्चय' इत्याहुः। हितमिति। धाञ् धारणपोषणयोः। दधातेः धीयते इति क्तप्रत्ययः। 'दधातेः हिः' इत्यनेन साधु। वच भाषणे, उच्यते। वचेः ण्यत् 'वचोः' इति शब्दसंज्ञायाम् कुत्वम्॥ २॥

धनाभावात् स्वजनैरवमानमाह धनेति। धनेनार्थेन हीनो निर्धनः पुरुषः। स्वस्यात्मनः भार्य्यया पत्न्याप्यवमन्यते अपमान्यते। पत्न्यादयः सर्व्वे सत्सु धनेषु सुखिनो भवन्ति। ते च धनिनं गृहपतिमाद्रियन्ते। धनाभावे सुखाभावादवमन्यन्ते च

पुष्पहीनं सहकारमपि नोपासते भ्रमराः ॥ ४ ॥

---

तदुक्तं कविभिः 'माता निन्दति, नाभिनन्दति सुतः कान्ता च नालिङ्गते' इति । धनाभावादित्यर्थः । फल-पुष्प-पत्रविहीनं महीरुहं यथा विहगा त्यजन्ति । यथा च शुष्कं सरः सारसाः परिहरन्ति तद्वद्धनहीन-मानवं कुटुम्बाः विजहति । अन्यच्चोक्तम् कविभिः 'असौ जीयादेकः सकलगुणहीनोऽपि धनवान्, बहिर्द्वारे यस्य तृण-लवसमाः सन्ति गुणिनः' । हीनः । ओहाक् त्यागे, हीयते । तत्र आदिकर्म्मणि क्तप्रत्ययः, कर्म्मणि वा । 'घु मा स्था' इत्यादिनेत्वम् । 'ओदितश्च' इति नत्वम् । डुभृञ् धारण-पोषणयोः, भ्रियते भूर्य्यते वा । भृ भरणादौ, इत्युभयोर्ण्यत् । यत्तु चोरस्वामिना 'संज्ञाया भृञ् अहलोर्ण्यतो तत् साधितं तत्र, संज्ञायामर्थे 'समजनिपदः' इत्यादिना परत्वात् क्यपा भाव्यम् । संज्ञा पर्य्युदासस्तु पुंसि सावकाशो नतु स्त्रियाम् । यतः 'तदनुबन्धग्रहणे नातदनुबन्धकस्य' इति न्यायात् भृञ एव क्यप् स्यान्न तु डुभृञः ॥ ३ ॥

पूर्व्वसूत्रोदाहरणव्याजेन प्रयोजनसिद्ध्यभावे वस्तुपरिहारमाह पुष्पेति । पुष्पेण प्रसूनेन हीनं रहितम् । सहकारं सुगन्धिरसालद्रुमम् । यद्वा सामान्य चूततरुम् । भ्रमराः मधुलिहः । नोपासते कुसुमाभावात् तत्तरुसमीपं नोपसर्पन्ति । विशुष्कं सरः सारसाः । दृष्टान्तभूतं पूर्व्वसूत्रस्येदं सूत्रमिति । 'पुष्पं विकाश आर्त्तवे । धनदस्य विमाने च प्रसूने नेत्र-

## विद्या धनमधनानाम् ॥ ५ ॥

रुच्यपि' इति हैमः। पुष्प विकसने, पुष्प्यति। पचाद्यचा सिद्धम्। 'सहकारोऽति सौरभः' इत्यमरः। हर्षं सहकारयति मेलयतीत्यचा सिद्धम्। दीनपदं प्राङ् निरुक्तम्। भ्रमराः। भ्रमु अनवस्थाने, भ्रमति। 'अर्त्तिकमि भ्रमि चमि' इत्यादौणादिकात् करण्॥ ४॥

निर्धनस्य पुंसो विद्यया धनवत्त्वमाह विद्येति। अधनानां दरिद्राणां निःस्वानामिति। विद्या शास्त्राद्यध्ययनजनितं ज्ञानं पाण्डित्यमिति च सैव धनमर्थः। यतस्तया जगति धनं संवृत्तते यदा तपोधनवद् विद्यैव धनं श्रेयम्। 'धनस्तु गोधनं वित्तं' इति विश्वः। धन धान्ये, धनति। अदचासिद्धम्। अन्यच सुभाषितसन्दर्भे 'विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनम्' इत्यादि। अपरञ्च मानवे द्वितीयाध्याये—

"श्रद्दधानः शुभां विद्यामाददीतावरादपि।
अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि"॥

यशोक्तं—

"चित्तं बन्धुर्वयश्चैव तपो विद्या यशोत्तरम्।
पूजनीयानि सर्वेषां विद्या तेषां गरीयसी"॥

अन्यच नीतौ—

"ये बाल्यभावान्न पठन्ति विद्याम्
ये यौवनस्था अधना अदाराः।

# विद्या चौरैरपि न हार्य्या ॥ ६ ॥

ते शोचनीया इह जीवलोके,
मनुष्यरूपेण मृगाश्चरन्ति" ॥

विद ज्ञाने, वेत्तीत्यतः क्यप् ॥ ५ ॥

विद्याया अनपहरणीयत्वमाह विद्येति । चौरैः तस्करैर्दस्युभिश्च । अपि निश्चितम् । न हार्य्या नैवापहरणीया । चौरः सर्वं धनमपहर्त्तुं शक्ताः । विद्याया आन्तरद्रव्यत्वात्तां अपहर्त्तुं न शक्नुवन्ति । तदुक्तं गारुडे—

"गृहे चाभ्यन्तरे द्रव्यं नष्टं चैव तु दृश्यते ।
अशेषं हरणीयञ्च विद्या न ह्रियते परैः ॥
अन्त्यजा अपि यां प्राप्य क्रीडन्ति यक्ष-राक्षसैः ।
सा विद्या केन भीयेत यस्याः कोऽप्यः समीऽपि न ॥
स्वरेण कुञ्जरं हन्ति सर्षपेण तुरङ्गमम् ।
मक्षिकापदमात्रस्य विषस्य विषमा गतिः ॥
एवं विधं विधिं वत्स ! विद्यामन्त्रप्रभावतः ।
जीवन्ति भक्षितं पुंभिः तस्माद्विद्या परात्परा" ॥

सूरिभिश्चोक्तम्—

"ज्ञातिभिर्वण्टनेनैव चौरेणापि न नीयते ।
दानेनैव क्षयं याति विद्यारत्नं महाधनम्" ॥

चुर स्तेये, चोरणम् । अप्रत्ययात् । संज्ञापूर्वकत्वाच्च गुणः । चुरा शीलमस्य छत्रादिभ्यो णः, अन्ये तु प्रज्ञाद्यण्वा तत्-

## विद्यया ख्यातिः ॥ ७ ॥

## यशः शरीरं न विनश्यति ॥ ८ ॥

विदमाहुः । 'नश्वार्थी' इत्यत्र 'न प्राप्नोति' पाठे ग्रहणायोग्येति तदर्थः । प्राग्वदन्यत् ॥ ६ ॥

मानवस्य सुख्यातिनिदानमाह विद्ययेति । विद्यया ज्ञानविशेषेण सुशिक्षया वा । ख्यातिः कीर्त्तिर्भवतीत्यर्थः । विदुषा सदाचरणाध्यापनपरोपकाराणामनुष्ठानेन कीर्त्तिं ख्याप्यते । तथा सुखी यशस्वी च लोके । तदुक्तं गारुड़े—

"विद्या विवेकयोगेन शुभाशुभविचारिणाम् ।
विद्यते सर्व्वकामाप्तिस्तस्माद्विद्या परा मता ॥
विद्या विचारतत्त्वज्ञाः शान्ताः सन्मार्गगामिनः ।
भुञ्जतेऽपि हि भोगानि गच्छन्ति परमां गतिम् ॥
नहि विद्या कुलं जाति रूपं पौरुषमावृताम् ।
यशतं सर्व्वलोकानां पठिता उपकारिता" ॥

'भोगानि' इत्यत्र 'भोग्यानि' क्वचित् पाठान्तरम् । 'प्रथा ख्यातौ' इत्यमरः । वेदान्ते तु ख्यातिशब्दोऽन्यथार्थबोधकः । सांख्यनये ज्ञानार्थकः ख्यातिशब्दः । ख्या प्रकथने, ख्यानम् । चक्षिङादेशो वा । ततः क्तिन् । 'विद्यया ख्यापिता ख्याति'रिति भिन्नपाठे विद्यया ख्यातिः प्रथा सम्पन्ना भवतीत्यर्थः ॥ ७ ॥

कीर्त्तिमण्डितदेहस्याविनश्वरत्वमाह यश इति । यशः कीर्त्तिः समज्ञेति यावत् । तेन युक्तं मृतं वा शरीरं देहः । यश-

## न म्लेच्छभाषणं शिक्षेत ॥ १३ ॥

ज्ञानार्थे यदा शुश्रूषा जिज्ञासुर्वा भवेत्तदा नीति शिल्पादि विषये उपदेष्टव्य स एवेति नीतिविदा समय । यतो नीतौ त्रिवर्गस्यापेक्षास्ति न मोक्ष मार्गस्य । विष्णुनाप्युक्तम्—

"सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव स" इति ।

त्रिवर्गं धामरो मोक्ष माहातस्य पृथक् जन "।

इत्यमर । उपैतव्येति । उपपूर्वादेतेर्विद्याग्रहणार्थे । मोक्षस्येति । नीत्येवेति तृतीया युक्ता । यद्वा कर्मणि षष्ठीति केचित् ॥ १२ ॥

पुलिन्दादिभाषणस्य शिक्षायां ज्ञाननैपुण्य-बुद्धिनैर्मल्याभावात् तन्निषेधमाह नेति । म्लेच्छानां किरात शबर पुलिन्दानां भाषणं भाषा कथनञ्चेति । तत्र शिक्षेत नापि ग्रन्थाहरतो वा अभ्यासं कुर्य्यात् । सा च भाषा त्रिविधा । कथ्या लेख्या देश्या च । तासु द्वे प्रसिद्धे । देश्योक्ता भोजराजेन । तथा च—

'देशे देशे नरेन्द्राणां जनानाञ्च स्वके स्वके ।

भाषा विभिद्यते यस्मात्तस्माद्देश्य प्रकीर्त्तितम्" ॥

अन्यश्चोक्तमृषिणा—

'न शातयेदिष्टकानि फलानि तु फलेन वै ।

न म्लेच्छभाषां शिक्षेत नाकर्षेच्च कदाश(श) नम्" ॥

एवमेव महाभाष्ये 'न म्लेच्छितवै नापभाषितवै, म्लेच्छो ह वा एष यदपशब्द'। 'म्लेच्छा मा भूम इत्यध्येयं व्याकरणम्'। न म्लेच्छदेशे' इति विष्णुसूत्रम् । तत् स्वरूपन्तद्वैवोक्तं यथा—

## म्लेच्छानामपि सुवृत्तं ग्राह्यम् ॥ १४ ॥

---

"चातुर्वर्ण्य-व्यवस्थानं यस्मिन् देशे न विद्यते।
स म्लेच्छदेशो विज्ञेय आर्य्यावर्त्तस्ततः परम्" ॥

भास्कराचार्य्यास्त्वाहुः—

'वर्णव्यवस्थितिरिहैव कुमारिकाख्ये
शेषेषु चान्त्यजजना निवसन्ति सर्व्वे'।

अन्यत्रोक्तं—

"गोमांसखादको यस्तु विरुद्धं बहु भाषते।
सर्व्वाचारपरिभ्रष्टो म्लेच्छ इत्यभिधीयते" ॥

किन्तु विद्वांसः प्राहुः म्लेच्छादिदेशविसर्गो धर्म्मादि विषये न तु 'नीति वार्त्तादौ'। वाणिज्य-विद्याध्ययनाद्यर्थेषु न देश-विचारः। तथा च 'नीचादप्युत्तमां विद्या'मिति। अपरत्रोक्तं मनुना—'अब्राह्मणा दध्ययनमापत्काले विधीयते' इति च। सूतसंहितायाञ्च—

"ब्राह्मण्यां वैश्यतो जातः क्षत्ता भवति नामतः।
अस्यामनेन चौर्य्येण म्लेच्छो विप्रः प्रजायते" ॥

इति। 'शबरो म्लेच्छभेदे च'। 'किराती म्लेच्छभेदे स्यात्' इति मेदिनी। 'पुलिन्दः कथ्यते म्लेच्छे' इति तारपालः। 'भेदाः किरात-शबराः पुलिन्दा म्लेच्छजातय' इत्यमरश्च। एतेषां मते एतएव म्लेच्छदेशत्वेन ख्याताः। म्लेच्छ अव्यक्ते शब्दे, म्लेच्छति। अच्प्रत्ययेन सिद्धः। १२।

हीनजनतोऽपि सुवृत्तग्रहणमाह म्लेच्छानामिति । म्लेच्छानां खसादिविषयजातानां लोकानाम् । यत् सुवृत्तं सुशिक्षा सौशील्यं वाणिज्यमिति यावत् । तद्ग्राह्यं ग्रहणीयं शिक्षणीयम् । यदुक्तम्—

'विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम्' । प्रागुक्तमन्यत् । गुणाः सुचरितानि सर्व्वतो ग्राह्याणि । तथाचैतस्य मधुचाणक्ये 'सिंहादेकं वकादेकं षट् शुन चीणि गर्दभात्' । गुणैर्नीचोऽपि श्रेष्ठत्वं याति यथा विदुरादिः । अन्यच्च । 'महताश्चरिताभ्यासे महत्त्वं याति निश्चितम्' । अतो महतां सुचरितानुकरणे न दोषः । सारग्रहणे नोच्चावचविचारः । तथा च कापिलं सूत्रं 'सर्व्वतः सारादानं षट्पदवत्' । पुराणे च 'सर्व्वतः सारमादद्यात् पुष्पेभ्य इव षट्पदः' । केचित्तु वाणिज्यविद्याशिक्षार्थं म्लेच्छदेशगमनं युक्तम् । ततः प्रतिगमनात्परं प्रायश्चित्तमनुष्ठेयमित्याहुः । तथा च श्रुतिः 'नावेव सिन्धुम्' । 'समुद्रसंयानम्' इति बौधायनः । अत्र नावा द्वीपान्तरगमनमिति तत् सूत्रव्याख्यानम् । 'आघूर्णितो वा वातेन स्थितः पोते महार्णवे' इति मार्कण्डेयपुराणे । वराहपुराणे च—

"समुद्रयाने रत्नानि महामूल्यानि साधुभिः ।
रत्नपारीक्षकैः सार्द्धं आनयिष्ये बहूनि च ॥
शूकेन सह सम्प्राप्तो महान्तं लवणार्णवम् ।
पोतारूढाः ततः सर्व्वे पोतवाहैरुपासिताः ॥
अपारे दुस्तरेऽगाधे यान्ति वेगेन निश्चयः' ।

## शत्रोरपि सद्गुणो ग्राह्यः ॥ १५ ॥

## विषादप्यमृतं ग्राह्यम् ॥ १६ ॥

---

अथवक्तव्यमुद्रभावसंस्थाने प्रत्ययाधिक्यं तदाह याज्ञवल्क्यस्मृति-व्याख्यानेऽपरार्कः प्राग्युक्तमन्यत्र ॥ १४ ॥

गुणग्रहणे शत्रु-मित्र-प्रतीति-परिहारमाह शत्रोरपीति । शत्रोररेः द्वेष्टुरिति । अपि निश्चयार्थं । ननु चेष्टो नौश्चवारः प्रशंसनीयो गुणः । स च वैदुष्य-सौशील्यादिः । ग्राह्यः उपादेयो ग्रहणीयः । उक्तञ्च महाभारते 'शत्रोरपि गुणा वाच्या दोषा वाच्या गुरोरपि' । नापि शत्रोर्दोषो ग्राह्यो गुणस्त्याज्यः । एवं मित्रस्यापि दोषो ग्राह्यः परिहाराय विवर्जने वा । यतः

'गुणाः सर्वत्र पूज्यन्ते पितृवंशो निरर्थकः' ।

इति तत्रवाक्यमस्ति । सद्गुण इत्युक्तेरसद्गुणः कृत्रिमगुणोऽपि हेयः । कविसमयश्च 'गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः' । 'शौर्ये प्रत्यागते सत्त्वशुक्लसन्ध्यादिके गुणः' इत्यमरः । गुण आमन्त्रणे, गुण्यते । ततो घञ् । १५ ॥

पीयूषस्य महार्घत्वात्तस्य गरलादपि ग्रहणौचित्यमाह विषादिति । विषाद् गरलात् कालकूटादिति । अमृतं सुधा पीयूषम् । महार्घद्रव्यं वेति । ग्राह्यमादानीयम् । यच्च महार्घवस्तु तत् विषादपि पूतिपात्रात् संग्राह्यम् । ग्राह्यत्वं हितकरोपादेयत्वेनेति । अमृतपदेनामृततुल्यमपि बोध्यम् । ननु स्वमादन्यमुद्रा अन्यदुपादेयम् । तदुक्तं महर्षिणा 'विषादप्यमृतं ग्राह्यममे-

## गुणे न मत्सरः कर्त्तव्यः ॥ १७ ॥

ध्यादपि काञ्चनम्' । अन्यत्र भारते यदुक्तं 'यत्रास्ते विषसंसर्गोऽमृतं तदपि मृत्यवे' इति तत्प्रकृतकर्तृ कक्रियाचरणविषये धर्मविषये वा मन्तव्यम् । स च शाठ्य-पापादिमिश्रितो धर्मोऽधर्माय भवतीति । 'पीयूषममृतं सुधा' इत्यमरः । विषादिति । 'गरले विषमस्त्रि च स्त्रियामतिविषायाम्' इत्युभयविवेके । विष्लृ व्याप्तौ, वेवेष्टि कायम् । विष प्रयोगे वा, ततः 'इगुपध' इत्यादिना कः । 'अमृतं यज्ञशेषे स्यात् पीयूषे सलिले इति । अयाचिते च मोक्षे ना' इति मेदिनी । न मृतं मरणमत्रेत्यमृतम् ॥ १६ ॥

गुणविषये मात्सर्यनिषेधमाह गुण इति । गुणे बुद्धेः प्राखर्य्ये विद्यादौ । यद्वा पुंसो विषयोत्कर्षे । मत्सरः मात्सर्य्योऽपरस्योत्कर्षे द्वेषः । मत्सर इति भावप्रधाननिर्देशः, तेन मत्सरतेत्यर्थः । यद्वा तत्कार्य्यं मात्सर्यम् । न कर्त्तव्यो नापि विधेयः । तदा स्वे विद्याहानिः समाजानिष्ट ख मानसमालिन्यं धैर्य्यञ्च वर्द्धते । गुणदर्शने हर्षो विधेयः । यतः सर्वत्र गुणोऽर्हणीय हितकरश्च । तस्माच्च कविभिः 'गुणैरुच्चतां याति' । 'पदं हि सर्वत्र गुणैर्निधीयते' इति च । 'मत्सरोऽन्यशुभद्वेषे तद्वत् कृपणयोस्त्रिषु' इत्यमरः । मदो हर्षे, मादाति परश्रुक्ष्ये । ततः 'कृ-भू मदिभ्यः कित्' इति रसः ।

"गुणो मौर्व्यामप्रधाने रूपादौ सुद इन्द्रिये ।

**अवस्थया पुरुषः सम्मान्यते ॥ १८ ॥**

**स्थान एव नराः पूज्यन्ते ॥ १९ ॥**

---

स्यागौर्य्यादि मत्वादि सम्बाधावस्ति वस्तुषु" ॥
इति मेदिनी । गुण आमन्त्रणे, गुण्यते इति । ततो घञ् ॥ १७ ॥

अवस्थया पुंसां गौरवमाह अवस्थयेति । अवस्था दशा । आमन्तते धन्या यौवनादिर्विशेषोऽवस्था चेति । यद्वा तया अवस्थया धनविद्यामानपरिजनस्थितिदशया । पुरुषः पुमान् नर इति । 'पुरुषः आत्मनि नरे पुन्नागे च' इति कोष. । सम्मान्यते, पूज्यते गरीयान् भवति । उक्तञ्च सूरिभिः 'अवस्था पूज्यते राजन् न शरीरं शरीरिणाम्' । यथा च छत्र-चामर-संचय-धारणाश्व सामन्त-दुर्ग-पोत सेनादिभिः, राजेति सम्मान्यते लोके । एषामभावे शासनमानतो राजा अवमन्यते । तदुक्तं—

"हस्ति-घोटक-सामन्त-नौका-दिग्दिगन्त साधनैः ।
राजा भवति लोकेऽस्मिन् न पुनर्नाममात्रतः" ॥

इति । 'विशेषः कालिकोऽवस्था' इत्यमरः । अवपूर्वात्तिष्ठतेरङ्. । 'अवस्थायामिति' ज्ञापकात् । पुर अग्रगमने, पुरति । 'पुरः कुषन्' इत्यनेन च सिद्धम् । अत. सततं सदवस्थाकरणेन भाव्यम् ॥ १८ ॥

योग्य स्थानावस्थितेर्गौरवकारत्वमाह स्थान इति । स्थाने स्वयोग्यावसरभूमौ । यस्य यदायत्तं योग्यं हितकरं स्थानं तस्य तदेव शुभम्, यथा शैलगह्वरं सिंहस्य । नराणान्तु निर्धनस्वार-

## आर्य्य-वृत्तमनुतिष्ठेत् ॥ २० ॥

वायुपूर्णनिरत्ययस्थानम् । नरा मानवाः पूज्यन्ते सम्मान्यन्ते लोकैरिति शेषः । ननु परायत्ते अयोग्ये च स्थाने केवल भ्रष्टा भवन्ति । स्थानगौरवाभावात् । तदुक्तं कविना—

स्थानस्थितस्य पद्मस्य सहायौ वारिभास्करौ ।
स्थानच्युतस्य तस्यैव क्लेद-शोषकरावुभौ" ॥

अन्यच्च—

"स्थानभ्रष्टा न शोभन्ते दन्ताः केशा नखा नराः" ।

यत्तु—'स्थानमुत्सृज्य गच्छन्ति सिंहाः सत्पुरुषा द्विजाः' । इति तत् पूर्व्वस्थानादुत्कृष्टस्थानलाभविषये । अपरञ्च सामान्य-नीतौ—

"स्थानं प्रधानं न बलं प्रधानम्
स्थानस्थितः कापुरुषोऽपि सिंहः" ।

इति सहकारि-प्राधान्यादाह । 'स्थानं सादृश्येऽवकाशे स्थितौ वृद्धिक्षयेतरे' इति मेदिनी । स्थीयते अत्रेति स्थानम् । अधि-करणे भावे वा ल्युट् । नरः । नॄ नये । नरति, नृणाति वा अच् प्रत्ययेन सिद्धम् ॥ १८ ॥

महतामनुकरणे श्रेयमहत्त्वहेतुः स्यात्तदाह आर्य्येति । आर्य्याः आर्य्यावर्त्तवासिनः शिष्टाः । विद्या-विनय-नीति-धर्म्म-ज्ञान-सम्पन्नाः । तेषां वृत्तमाचरणं चरितम् । तदनुतिष्ठेत् आश्र-येत् समाचरेदिति । तदुक्तं वसिष्ठैः—

## न कदापि मर्य्यादामतिक्रमेत् ॥ २१ ॥

"कर्त्तव्यमाचरन् काममकर्त्तव्यमनाचरन् ।
तिष्ठति प्रकृताचारे यः स आर्य्य इति स्मृतः" ॥

ते चार्य्या यत्रागमनमारभ्य वर्त्तन्ते स आर्य्यावर्त्ताभिधो देशः । तदुक्तं मानवे—"आसमुद्रात्तु वै पूर्व्वादासमुद्राच्च पश्चिमात् ।
तयोरेवान्तरं गिर्य्योरार्य्यावर्त्तं विदुर्बुधाः" ॥

तदेव भारतं वर्षम् । तथा च—
"वर्षस्थानं विदुः प्राज्ञाः कर्म्म लोकञ्च भारतम्" ।

अन्यच्च—मैत्रेयं प्रति पराशरः—
"उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
वर्षं तद्भारतं नाम भारती यत्र सन्ततिः" ॥

महाकाव्ये शिशुपालवधे च—
"एतदूरगुरुभारभारतं वर्षमद्य मम वर्त्तते वशे" ।

इति । 'आर्य्य-सभ्य-सज्जन-साधवः' इत्यमरः । ऋ गतौ, अर्य्यते । अर्त्तुं योग्यो वा । 'ऋहलोर्ण्यत्' इत्यनेन सिद्धम् । 'वृत्तं वृत्तौ दृढे मृते । चरिते वर्त्तुले' इति हैमः । वृतु वर्त्तने, वर्त्तते । ततः क्तप्रत्ययेन सिद्धम् ॥ २० ॥

कार्य्यमर्य्यादालङ्घने नीतिविरोधात्तन्निषेधमाह नेति । मर्य्यादां सदाचरणसीमां नीतिनियममिति । कदापि कस्मिन्नपि कालेऽपि । नातिक्रमेदेव लङ्घयेत् । वारमेकं तल्लङ्घने तु तद्विषये सत्वहानिः साहसाधिक्यञ्च स्यात् । पुनस्तत्-

## नास्त्यर्घः पुरुष-रत्नस्य ॥ २२ ॥

## न स्त्रीरत्नसमं रत्नम् ॥ २३ ॥

करणमनायाससाध्यमवेत्। क्वापि च मृषाकथन प्रतिज्ञाभङ्ग-दोषोऽपि आपतति। इत्यय न्याय्यपथ-स्थितिर्मर्य्यादेति। 'मर्य्यादा धारणा स्थितिः' इत्यमरः। मर्य्या इति सीमार्थे अव्ययम्। तत्र दीयते। प्राग्वद्ड्। धाति पूर्व्वात् क्रमेर्विधिलिङ् ॥ २१ ॥

श्रेष्ठपुरुषस्य मूल्याभावमाह नेति। पुरुषरत्नस्य पुरुषेषु श्रेष्ठस्य उत्तमपुरुषस्येति यावत्। अर्घोमूल्यं नास्ति न विद्यते। अन्येषां रत्नानां रत्नवणिग्भिर्मूल्यं निरूप्यते पुरुषरत्नस्य तु केनापि मूल्यं निरूपयितुं न शक्यते वैदुष्यादिगुणस्यापरिमितत्वात्। 'मूल्ये पूजाविधावर्घः' इत्यमरः। अर्घ मह पूजायाम्, अर्घ्यते अनेन। 'हलश्चेति' घञ्। ततो न्यङ्क्वादित्वात् सिद्धम्। अर्घिधातोन्तरम्। तेन वा सिद्धम्। 'रत्नं सजाति श्रेष्ठेऽपि मणावपि नपुंसकम्' इति मेदिनी। रमु क्रीडायाम्, रम्यते। ततो रमन्तः। अन्तर्भावितण्यर्थो वा। यद्वा रमन्तेऽस्मिन्। 'रमेस्त च' इत्यौणादिकसूत्रात्। नेड् वशीत्यादिना नेट्। 'घेर-र्निटि इत्यादिना सिद्धम् ॥ २२ ॥

सर्व्वरत्न स्त्रीरत्नस्य श्रेष्ठतामाह नेति। स्त्रीरत्नम्। स्त्री, वरवर्णिनी। सैव रत्नाधिका। तदमूल्यम्। मूल्येन तादृश्याः वरवर्णिन्या दुर्लभत्वात् क्रयलाभावः। एतत्तुल्यं रत्नं भुवि

## दुर्लभं रत्नम् ॥ २४ ॥

नास्ति। तथाच मार्कण्डेयपुराणे 'स्त्रीरत्नमति चार्व्यङ्गीयोत- यस्तो दिवस्त्रिया'। स्त्रीरत्नं स्त्रीषु श्रेष्ठम्।—'जातौ यदुत्कृष्टं तद्रत्नम्'। 'विष्णुपुराणे तद्धोकायात्र चतुर्दशरत्नानि यथा—

'चक्रं रथो मणिः खड्गश्चर्म्म रत्नञ्च पञ्चमम्।
केतुर्निधिश्च सप्तैवमप्राणानि प्रचक्षते॥
भार्य्या पुरोहितश्चैव सेनानी रथकृच्च यः।
पत्त्यश्वौ कलभश्चेति प्राणिनः सप्तकीर्त्तिताः॥
चतुर्दशैतानि रत्नानि सर्व्वेषां चक्रवर्त्तिनाम्'।

अन्यत्रोक्तं सूरिभिः—

"सर्व्वरत्नस्य रत्नस्य वेत्ता च भुवि विद्यते।
स्त्रीरत्नस्य च तत्त्वज्ञा न सन्ति जगतीतले"॥

प्राशुक्तमन्यत्॥ २३॥

मणिः सततमर्थ्यानभ्यमाह दुरिति। रत्नं मणि प्रभृति। तत्र स्वजाति-श्रेष्ठम्। तद्दुर्लभं भुवि। यदुक्तं येन केनचित् लब्धिनभ्यते। अपरञ्च रत्नतत्त्वं भोजराजीय-युक्तिकल्पतरौ गरुड़पुराणे च वर्णितमस्ति। तथाचोक्तम्—

"परीक्षा परिशुद्धानां रत्नानां पृथिवीभुजां।
धारणं संग्रहो वापि कार्य्यः श्रियमभीप्सता॥
शास्त्रज्ञाः कुशलाश्चापि रत्नभाजः परीक्षकाः।
त एव मूल्यमात्राया वेत्तारः परिकीर्त्तिताः"॥

## अयशो भयं भयेषु २५ ॥

---

'रत्नं स्वजाति श्रेष्ठे स्यात् मणावपि नपुंसकम्' इति हैम-कोषे। रत्नलक्षणं धारणञ्च प्रशस्तं कीर्त्तितं राजवल्लभे। यथाच—

"धन्यं यशस्यमायुष्यं श्रीमद्व्यसनसूदनम्।
हर्षणं काम्यमौजस्यं रत्नाभरणधारणम्" ॥

तानि च सूर्य्य-चन्द्रकान्त-पद्मराग-नीलकान्तादीनि विविधानि। प्रागुक्तमन्यत् ॥ २४ ॥

सुधिया मानवानां लोकेषु श्रेष्ठ-भयमाह अयश इति। सर्व्वेषु भयेषु साध्वसेषु। यद्वा तज्जनकेषु विषयेषु। पुंसामयशोऽपकीर्त्तिः कुत्सार्थां भयं भीतिरेव मतन्ज्ञेयम्। तथा च भारते—

"सम्भावितस्यापकीर्त्तिर्मरणादतिरिच्यते"।

अन्यच्च तत्रैव—

"अकीर्त्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम्"।

अपरञ्च—

"अपमानं तथा लज्जा बन्धनं भयमेव च।
रोग-शोकस्थलभङ्गो मृत्युश्चाष्टविधः स्मृतः ॥"

कालेऽपमानविशेषो मृत्युदेश्यो भवति। कविसमयश्च 'परीवादस्तथ्यो हरति हि महिमानं जनरवः' इति। 'लोकवादो जनरवः परीवादापवादयोः'। अवैधकर्मानुष्ठाने अयशो मह-द्भवति। तदुक्तं महर्षिणा 'अयशो महदाप्नोति नरकञ्चाधि-

## स्त्रियोऽपि स्त्रैणमवमन्यन्ते ॥ २८ ॥

---

माह नेति । स्त्रैणस्य सतत कामिन्यासक्तस्य स्त्रीजितस्य काम-किङ्करस्येति यावत् । तथाहि कामासक्तत्वेनोक्त क्रियाम्मनो देहेन्द्रिय वैकल्यादीश्वराराधने प्रवृत्त्यभावाच्च धर्मकार्य्याभाव । स्वर्गोवाप्ति स्वर्गप्राप्तिस्तल्लाभो न भवति । एव धर्मकार्य्यं, प्रवृत्त्य-भावात्तत्कार्य्ये तदनुष्ठान तत्फलञ्च न भवति । धर्मकार्य्यञ्च याग दान देवाराधन योग परोपकारा । क्वापि इद सूत्रद्वयं पृथगरूपेण विभक्त दृश्यते । परन्तु प्रयोजनाभावादर्थवैषम्याच्चैकमेव सूत्र युक्त शोभते । 'स्त्रैण स्त्र्यासक्त कामुको लम्पटो रमणीरत' । स्त्रियामय समासक्त इति 'स्त्रीपुंभ्याम्' इति नञ् । कृत्यो विहिते कार्य्ये च कृत्या क्रियादिवौकसो' इति रभस । कृत्यमिति । 'कृञ शच' इत्यत्र चकारात् क्यप च भवति । यद्वा कृती च्छेदने । कृत्यते । 'ऋदुपधात्' इत्यादिना क्यप स्यात् । स्वर्गप्राप्तिर्धर्मकृत्योपायादिकञ्च पुराणे धर्मशास्त्रे वर्णितमस्ति ॥ २७ ॥

स्त्रीपरायणस्य स्त्रीसन्निधेऽप्यवमानमाह स्त्रिय इति । स्त्रिय पतिव्रता योषित अन्या वा । स्त्रैण स्त्रीसेवारत पुमांसम् । अवमन्यन्ते हीनमिवावजानन्ति । सच्चारित्र्याभावाच्छक्ति-राहित्याच्च । केचिद्वदन्ति 'तारुण्याभावाद् दुःशीलत्वाच्चेति' । 'स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः' अमर । स्त्यायति गर्भोऽस्याम् । 'स्त्यायतेर्ड्रट्' इत्यौणादिक प्रत्यय । टिलोपो

**पुष्पार्थिनः सिञ्चन्ति अद्भिः पुष्पतरुम् ॥ २८ ॥**

**अद्रव्य-प्रयत्नो वालुकापीडनादनन्यः ॥२९॥**

---

धर्मोपेताः । 'टिड्ढा' इत्यादिना ङीप् । समर्जेष्वपि कामासक्ता अयथार्था भवन्ति । दौर्ब्बल्यादकर्मण्या अविश्वस्ताश्चेति ॥२८॥

कार्य्यसिद्धौ तद्योग्यसामग्रीसमासादनमाह पुष्पार्थिन इति । पुष्पार्थिनः प्रसूनकामिनः पुरुषाः । अद्भिः सलिलैः सिञ्चन्ति तरुमूलदेशे आर्द्रीभूतं कुर्व्वन्ति तेन च पुष्पप्राचुर्य्यं स्यात् । पुष्पतरुम् पुष्पितान् महीरुहान् । तरुतलमूले सलिलसेकात् यथाभिप्रायं पुष्पाणि यथाकामं लब्धुं शक्नुवन्ति । क्वचि-देवं सूत्रपाठो दृश्यते 'न पुष्पार्थी सिञ्चति शुष्कतरुम्' एवं पाठे पुष्पार्थी जनः शुष्कतरुं न सिंचति । अपि तु जीवितमहीरुहं सिञ्चति । यतश्च तस्य येन प्रयोजनसिद्धिर्भवति स तदर्थं यतते । सभाद्रव्ये च तत् । तथा च दध्यर्थी धेनुसेवनं कृत्वा क्षीर-मेव गृह्णाति न तु वृषसेवनेन । 'पुष्पं प्रसूनं कुसुमं सुमनः' इत्यमरः । पुष्प विकसने, पुष्प्यति । ततः पचाद्यच् । तरुः । तॄ प्लवनतरणयोः, तरति । 'भृ मृ शीङ्' इत्यौणादिकसूत्रादुः ॥२८॥

कार्य्ययोग्य-सारवस्त्वनुसन्धानं प्रयोजनं तत्प्रसाधयोग्यानु-शीलनमाह अद्रव्येति । अद्रव्येषु असारवत्सु स्वपदार्थेषु वा यः प्रयत्नः फलोत्पादनार्थं प्रवर्त्तनोद्यमः । स प्रयत्नः वालुकापीडना-द्वालुकाकर्षणादनन्य एव । यथा वालुकापीडनं निरर्थकम् ।

## नानपत्यस्य स्वर्गः ॥ १०४ ॥

## या प्रसूते भार्या ॥ १०५ ॥

---

अधमोऽप्यहृदया कुर्यादकर्त्तोपचितं पितुः" ॥

"पात्रे त्यागी गुणे रागी भोगी परिजनैः सह ।
शास्त्रे बोद्धा रणे योद्धा पुरुषः पञ्चलक्षणः" ॥

पुरि स्थूलशरीरे शेते यः स पुरुषः । पुर अग्रगमने, पुरति । 'पुरः कुषन्' इति कुषन् ॥ १०३ ॥

अपत्यहीनस्य स्वर्गाभावे प्रतिबन्धकमाह नेति । अपत्यं पुत्र-कन्ये स्तः । नास्ति अपत्यं यस्य सोऽनपत्यः, तस्यानपत्यस्य पुंसः । अत्र षष्ठ्यर्थः सम्बन्धः । तस्य सन्ततिरहितस्य जनस्य स्वर्गाप्तिर्न भवति । न पतति वंशो येन जातेन तदपत्यम् । स्मृतावुक्तम् 'अनपत्यस्य गतिर्नास्ति पतितस्य तथैव च' इति । 'अपत्यं तोकं तयोः समे' इत्यमरः । तयोः सुतकन्ययोः । पत्‌-ऌ गतौ, पतति । बाहुलकाद् यः । अघ्न्यादिर्वा । सत्पुत्र-जनन-प्रशंसामाह पुराणे—

"भार्यामूलाश्च पुत्राश्च भार्यामूला गृहास्तथा ।
भार्यामूलं सुखं भवेत् गृहस्थानां गृहे सदा" ॥

इति ॥ १०४ ॥

भार्याया विशिष्टत्वमाह येति । या नारी पत्योः तनयं प्रसूते सूयते वा सा भार्या पाणिगृहीतीत्यर्थः । तदुक्तं धर्मशास्त्रादि—

## तीर्थं समवाये पुत्त्रवतीमनुगच्छेत् ॥१०६॥

"न भार्य्यया विना पुत्रो न पुत्रेण विनान्वयः" ।

अन्वयोऽत्र वंशः ।

अन्यच्च नीतौ—

"भार्य्यामूलं सदापत्यं भार्य्यामूलञ्च मङ्गलम् ।
भार्य्यामूलञ्च संसारो भार्य्यामूला च सद्गतिः" ॥

'भार्य्या जाया' इत्यमरः । पाणिः स्वहीतोऽस्याः 'पाणिगृहीती भार्य्यायाम्' इति वार्त्तिकम् । डुभृञ् धारणपोषणयो', भृ भरणादौ वा । भ्रियते भूर्य्यते च तयोर्ण्यत् । अन्यदर्थशास्त्रेऽस्ति ॥१०५॥

तीर्थसमूहे तनयवतीं पश्चात्कृत्य पुंसो गमनमाह तीर्थेति । तीर्थानां तैर्थिकानां यात्रिणां समवाये सम्मेलने पुत्रवतीमपत्यवतीं स्त्रियम् अनुपश्चात्कृत्य गच्छेत् । यद्वा तीर्थानां धर्म्म-सभामहोत्सवानां समूहे । अथवा तीर्थानां काशी-प्रयागादीनां निकरे पर्व्वादौ तामनु पत्यादिः गच्छेत्, शुद्धाचारिणीनां सुतवतीनान्तु पत्या पित्रा सुतेन च वा सह धर्म्मक्षेत्रे, महोत्सवे, श्मशाने, मारीभये, महाविप्लवे, नगर-ग्रामदाहे, संग्रामे च गमनं निर्व्वाधम् । तेषु स्पर्शादिदोषोऽपि नास्ति । तथा च रत्नाकरे बृहस्पतिः—

"तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे ।
नगर-ग्रामदाहादौ स्पृष्टास्पृष्टिर्न दुष्यति" ॥

## सतीर्थाभिगमनाद् ब्रह्मचर्यं नश्यति ॥ १०७ ॥

अपरस्मृतौ—

"दाने विवाहे यज्ञे च संग्रामे देशविप्लवे।
आपद्यपि हि कष्टायां सद्यः शौचं विधीयते" ॥
"दीर्घकाष्ठे शिलापृष्ठे नौकायां आम्रबीजले।
सभायां सवगाम्यायां स्पर्शदोषो न विद्यते" ॥

इति स्मृतिः। 'नौकायां पट्ट-वाहने' इति पाठान्तरमप्यस्ति। 'यानादेरपरिहार्यत्व'मिति मानवस्मृतिव्याख्याने कुल्लूकभट्टः। अन्यत्र स्मृतौ—

"देवयात्रा विवाहेषु यज्ञ प्रकरणेषु च।
उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टिर्न विद्यते" ॥
"हट्टे सम्पूर्ण आचारः ग्रामे च तदर्धकम्।
तदर्धं तीर्थयात्रायां पथि शूद्रवदाचरेत्" ॥ इति च।

कौटिलीये तु 'तीर्थसमवाये औरसपुत्रां गच्छेत्' इति पाठे, औरसपुत्रां सहधर्मिणीं पतिरनुगच्छेदित्यर्थः। ग्रन्थार्थगाम्भीर्यादन्यत् पुष्कलमस्ति। 'तीर्थसमवाये पुत्र सुतामधिगच्छेत्' इत्थं पाठभेदे नार्थकाठिन्यम्। तृ प्लवनतरणयोः, तीर्यते अनेन। 'पा-तृ-तु-दि' इत्यादिना थक् ॥ १०६ ॥

सतीर्थाभिगमने ब्रह्मचर्यहानमाह सेति। स तीर्थाभिगमनात् सतीर्थाया एक गुरुसन्निधौ अन्येन सहाधीतविद्यायाः अभिगमनात् सङ्गमनात् तदापेक्षणाद् वा ब्रह्मचर्यं नश्यति, धर्मशास्त्र-

न परक्षेत्रे बीजं विनिक्षिपेत् ॥ १०८ ॥

इति चाणक्य-सूत्रे नीतिदर्शनामके चतुर्थोऽध्यायः ॥४॥

—oo—

विरोधात्। 'सतीर्थ्यास्त्वेकगुरवः'। समानं तुल्यं तीर्थं शास्त्रं गुरुर्वा येषां ते सतीर्थाः। 'निपानागमयोस्तीर्थम् ऋषिजुष्टजले गुरौ' इत्यमरः। तीर्थपदनिरुक्तिः प्रागुक्ता। 'न सतीर्थाभिगमनात्' इति पाठभेदे। सतीर्थस्य सतीर्थाया वा अभिगमनात् सङ्गमनात्। ब्रह्मचर्यमष्टाङ्गमैथुनत्यागव्रतं न नश्यति न विलुप्यते। परमयं पाठः धर्मशास्त्रविरुद्धत्वादुपेक्षणीयः। व्यवहारविरोधाच्च। उक्तञ्च—

"अपेत व्रतकर्मा च केवलं ब्रह्मणि स्थितः।
ब्रह्मभूतश्चरन् लोके ब्रह्मचारीति कथ्यते" ॥

तदर्थं योगसूत्रम्। 'ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः'। श्रुतयश्च 'ब्रह्मचारी गृही भवेत्'। 'अथ ब्रह्मचर्यम्'। 'इतरथा ब्रह्मचर्यादेव प्रव्रजेत्'। प्राग्विद्याभ्यासकाले ब्रह्मचारी, तत्समाप्तौ पश्चाद्गृही भवेत्। गीतायामपि—

"ब्रह्मचर्यमहिंसा च शारीरन्तप उच्यते"।

तीर्थ्यमिति पाठः साधुरिति केचनाहुः। तदा समाने तीर्थे वसन्ति 'समाने तीर्थे वासी' इत्यनेन यत्। 'तीर्थे ये' इति समानस्य सः। ब्रह्म वेदः तयोर्ज्ञानं वा चरति अर्ज्जयति। ब्रह्मणि वेदे सत्ये च चरणमिति ब्रह्मपूर्व्वक चरधातोः 'गदमदचरयमश्चे'त्या-

दिना यत्। 'न ऋत्वभिगमाद् ब्रह्मचर्य्यं नश्यति' इतीत्यं पाठो विदूषां केषाञ्चित् मन्यतः। स च धर्मशास्त्राविरुद्धः ॥ १०७ ॥

अन्येषां क्षेत्रे बोजार्पणनिषेधमाह नेति। परेषामन्येषां क्षेत्रे दारेषु बोजं बिन्दुं यौथिध। नापि मोहात् प्रमादाद्वा विनिक्षिपेत् परित्यजेत्। यद्वा परेषां क्षेत्रे तत्स्वामित्व विशिष्टे सस्यादिजननोपयुक्तस्थाने बोजमङ्कुरकारणं न निक्षिपेदिवारोपणं कुर्य्यात्।

'क्षेत्रं शरीरे केदारे सिद्धस्थान कलत्रयोः' इति विश्वः। यदि केनापि परक्षेत्रे बोजवपनं क्रियते तदा तेनापि यन्तुः क्षेत्रे पुनर्वीजनिक्षेपः करिष्यते क्षेत्रेन महाननर्थो विवादश्च स्यात्। क्षि क्षये, क्षि निवासगत्योश्च, क्षीयते धान्यादि। तत् ष्ट्रौणादिक-ष्ट्रयात् ष्ट्रन्। 'बीजं तु रेतसि। स्यादाधाने च तत्त्वे च हेतावङ्कुर-कारणे' इति विश्वः। बीजम्। ईज गतिकुत्सनयोः, विशेषेण ईजते। विपूर्वात् ततोऽप्। बीज्यते वा वयशोरभेदाद् घञा सिद्धम्। कुत्वन्तु न भवति। 'चजो'रित्यादिसूत्रे 'निष्ठाया-मनिटः' इति वार्त्तिककृता पूरितत्वादस्य च धातोर्निष्ठाप्रत्यये नेट् स्यादिति ॥ १०८ ॥

अपारे दुस्तरेऽगाधे संसारे सार-बुद्धिना।
चाणक्यमसि-पोतेन सीर्य्यतां स विपश्चिता ॥

इति दर्शनमूलनाथकासूत्रव्याख्यायां श्रीईश्वरचन्द्रशास्त्रिसङ्ग्रे-कृतायां सारार्थबोधिन्यां चतुर्थोऽध्यायः ॥४॥

—०§०—

# पञ्चमोऽध्यायः ।

—०*०—

## पुत्त्रार्था हि स्त्रियः ॥ १ ॥

---

पूर्व्वाध्याये विषयान्तरमुक्त्वास्मिन् पञ्चमाध्याये दाराणां विधेयत्वमाह पुत्रेति । स्त्रियः पत्न्यः पाणिगृहीत्यः इति । पुत्रार्थाः पुत्त्रोऽर्थः प्रयोजनं यासां ता भवन्तीति शेषः । अत्र स्त्रीपदेन पत्न्येव ग्राह्या । सा तु विवाहिता धार्म्मिकापत्यो-त्पादने समर्था ना विवाहिता । दम्पत्योः सहाधिकारात् । पत्यु-र्यज्ञे संयोगो यया सा पत्नी । तथा च सूत्रम् 'पत्युर्नो यज्ञसंयोगे' । उक्तञ्च—

"पुत्त्रार्थं क्रियते भार्य्या पुत्रः पिण्ड-प्रयोजनः" ।

एवमन्यत्रोक्तम्—

"रति-पुत्त्र फला दाराः दानभुक्ति-फलं धनम्" ।

न ताः केवलं सुखभोगार्थाः । अपरञ्च—

"भार्य्यावन्तः क्रियावन्तः सततं गृहमेधिनः ।
भार्य्यामूलं कुलं सर्वं तस्माद् भार्य्या परा गतिः" ॥

—'योषितायां बह्वः प्रजाः पुरुषात् सम्प्रसूताः' इति मुण्डके । 'आत्मजस्तनयः सूनुः सुतः पुत्त्र' इत्यमरः । पुत्त्रः । पुन्नाम्नो नर-कात् त्रायते इति । पूञ् पवने, पुनाति । 'सुपि' कप्रत्ययः ।

**स्व-दासी परिग्रहो हि स्व-दासभावः ॥ २ ॥**

**उपस्थित-विनाशः पथ्यवाक्यं न शृणोति ॥३॥**

---

यद्वा पूर्यते च, 'पुवो ह्रस्वश्च' इति वप्रत्ययः। 'स्त्री वधूर्योषिता रामा' इति त्रिकाण्डशेषेऽपि। स्त्यायति गर्भोऽस्याम्। 'स्त्यायते-र्ड्रट्' टिलोपः यलोपश्च 'टिड्ढा' इति ङीप्। प्रागुक्तमन्यत् ॥ १ ॥

सेविकापरिग्रहे न्यस्य विनाशमाह स्वेति। स्वस्यात्मनः। दासी भुजिष्या परिचारिका इति यावत्। तस्याः परिग्रहो दार-त्वेन सम्भोगपात्रत्वेन च स्वीकारः। हि निश्चितं तेन स्वस्य च दासभावः सेवकत्वेन नीचत्वमिति। उक्तञ्च—

"हीयते हि मतिस्तात ! हीनैः सह समागमात्"।

इति। यथा क्षीरं पर्युषितदध्यायोगाद् झटिति दधित्वमेति। यदि मास्म आत्मनः नीचत्वमिच्छति तादृशाचरणेन स्वात्मावन-तिर्नैकागकर्त्तव्य, मतिमता तत्त्याज्यम्।

"परिग्रहः कलत्रे च मूले स्वीकारयोरपि।

शपथे परिवारे च राहुग्रस्तस्य भास्करे" ॥ इत्यजयः।

'दासी वाणाभुजिष्ययोः' इति मेदिनी। दसु उपक्षये, दस्यते। कर्मणि घञ्। गौरादित्वात् ङीप् ॥ २ ॥

प्रत्युत्पन्नविनाशग्रस्तस्य पुंसो हितवाक्याश्रवणे प्रवृत्त्यभाव-माह उपेति। उपस्थिते सम्प्रति काले विनाशसम्भवो यस्य सः। यद्वा उपस्थितस्य विषयस्य वर्त्तमाने उच्छेदोऽस्यास्तीति अर्श आदित्वादचा सिद्धः। तादृशो जनः पथ्यं हितं समुचितञ्च

## नास्ति देहिनां सुखदुःखाभावः ॥ ४ ॥

वाक्यं न शृणोति । नाकर्णयति । एवं बुद्धेर्विपरीत्येऽपि हितजनकं सद्वाक्यं न शृणोति । उक्तञ्च—

"दीपनिर्वाण-गन्धञ्च सुहृद्वाक्यमरुन्धतीम् ।
न जिघ्रन्ति न शृण्वन्ति न पश्यन्ति प्रमत्तकाः" ॥

अत्र 'प्रमत्तका' इत्यत्र 'गतायुष' इति पाठान्तरमस्ति । अन्यच्च 'विनाशकाले विपरीत-बुद्धिः' । अपरञ्च—

"प्रायः समासन्न विपत्तिकाले
धियोऽपि पुंसां मलिना भवन्ति" ।

पथोऽनपेतं पथ्यम् । 'धर्मपथ्यर्थन्यायादनपेते' इत्यनेन यत् । 'पथ्या स्त्री हरितक्याञ्च पथ्य हिते त्रिषु' इति मेदिनी वाक्यम् । उच्यते इति वच् धातोर्ण्यत् । 'चजोः' इति सूत्रेण कुः । 'वचोऽशब्दसंज्ञायां' इति वचेः कुत्वनिषेधात् वाच्यमिति । शब्दसंज्ञायान्तु कुप्रत्ययात् वाक्यम् ॥ ३ ॥

शरीरभाजां मनुजादीनां सुखदुःखयोरवश्यभावित्वमाह नेति । देहिनां शरीरधारिणां जीवानामित्यर्थः । सुखमनुकूलवेदनीयम् । दुःखं प्रतिकूलवेदनीयम् । एतयोरभावः कदापि नास्ति । काले कस्मिन् सुखं कस्मिन् वा दुःखमस्त्येव । देहस्य तयोः स्वाभाव्यात् । कविसमयश्च—

"अचिन्तितानि दुःखानि यथैवायान्ति देहिनाम् ।
सुखान्यपि तथा मन्ये दैवमत्रातिरिच्यते" ॥ इति ।

मातरमिव वत्साः सुखदुःखानि कर्तार-
मेवानुगच्छन्ति ॥ ५ ॥

'विविधं दुःख'मिति कापिलं सूत्रम् । बुद्धदेवोऽप्याह जगति 'सर्वं दुःखम्' इति ।

"कायो देहः शरीरञ्च मूर्त्तिः पिण्डः तनुस्तथा" ।
दिह उपचये, दिह्यते । घञा सिद्धम् । सुखदुःखे तत्क्रियायाम्, सुखयति । दुःखयति च । द्वे चवाद्यचा सिद्धे । यद्वा दुष्टानि खानीन्द्रियाणि यस्मिन् विषये देहे च । दुरिन्द्रियं खनति वा । तथा 'न्येभ्योऽपि' इत्यादिना डः प्रत्ययेन दुःखमिति सिद्धं स्यात् ॥ ४ ॥

सुखदुःखयोः पुरुषानुसरणमाह मातरिति । यथाऽऽस्तनयाः शिशवः । मातरं जननीमिव यथा । ते रक्षणाय प्रसृतिमनुधावन्ति । तद्वत् सुखानि दुःखानि च तत्तत्कर्तारं सुखदुःख-भोक्तारमेवानुगच्छन्ति अनुसरन्ति । ये ययोः सुखदुःखयोर्भोक्तारः तैः तयोरुत्पादकाः । स्वस्वकर्मजनितं भुज्यमानं फलं सुखम् दुःखञ्च समयान्तरेऽप्यनुभवनीयम् । तथाच शास्त्रकृद्भिः—

"यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथैवात्मकृतं कर्म कर्त्तारमनुगच्छति" ॥

भट्टरूपेणेत्यर्थः । अध्यात्मसंज्ञके रामायणे च—

"सुखस्य दुःखस्य न कोऽपि दाता,
परो ददातीति कुबुद्धिरेषा" । इति प्रागुक्तम् ।

तिलमात्रमप्युपकारं शैलमात्रमिव मन्यन्ते
साधवः ॥ ६ ॥

---

अन्यच्च—"चक्रवत्परिवर्त्तन्ते दुःखानि च सुखानि च" । पुरुषस्येति सम्बन्धः । दुःखलक्षणं न्यायदर्शने 'बाधना लक्षणं दुःखम्' इति । सुखस्य लक्षणं किमपि न्यायसूत्रकारैर्न कृतम् । नवीनैर्दुःखाभावरूपत्वेन तत् स्वीकृतम् ॥ ५ ॥

परोपकारस्वीकारे साधूनामवश्यकर्त्तव्यत्वमाह तिलेति । तिलमात्रं तिलपरिमितम् । विन्दुमात्रमत्यल्पमपीत्यपिना सूचितम् । उपकारं हितमानुकूल्यमिति । साधवः सदात्मानः साम धन विद्या निपुणाः । शैलमात्रं गिरिपरिमितम् । अमितं महान्तं वा । मन्यन्ते स्वीकुर्वन्ति । असाधवस्तु हिमशैलपरिमितमुपकारं सर्षपमितं जानन्त्यविवेकात् । एष एव साध्वसाधु प्रभेदः । अतः साधूनामुपकार-करणे सर्वे प्रचेष्टिताः भवन्ति । उक्तञ्च—

"उपकारशतेनापि दुर्जनः केन गृह्यते ।
साधुः सम्मानमात्रेण भवत्येवात्मविक्रयी" ॥

इति राजनीतौ । प्राङ्निरुक्तः साधुशब्दः । 'उपकारो हितमानुकूल्यमिति' प्राञ्चः । उपकरणमुपकारः । उपपूर्व्वात् करोतेर्घञ् । 'शैलो भूभृति शैलन्तु शैलेये तार्क्ष्ये शैलके' इति हैम. । शिलाः सन्ति यत्रेति शिलाशब्दाज् 'ज्योत्स्नादित्वादण्' । तिल स्नेहने, तिलति । इगुपधत्वात् कः ॥ ६ ॥

## उपकारोऽनार्य्येष्वकर्त्तव्यः ॥ ७ ॥

## प्रत्युपकारभयादनार्यः शत्रुर्भवति ॥ ८ ॥

---

अनार्य्याणां हीनजनानामुपकारकरण-निषेधमाह उपेति। अनार्य्येषु शबरकिरातपुलिन्देषु। यद्वा नीच-पामर-लम्पट-चौरेषु। उपकारो हिताचरणमिति। अकर्त्तव्योऽविधेयः। यतस्ते तु क्रूराः मूढा समायतौ द्वेष्टारश्चेति। तेषां हितानुष्ठाने विपदुद्धरणेऽपि प्राणिवाप्तौ प्रत्यपकारकरणम्, परमहिताचरणं करिष्यन्त्येव। आत्मन्येवापदं सम्भावयेत्। नतु मैत्री-करुणा-मुदिताः। अनार्य्याः—

"भेदाः किरात-शबर-पुलिन्दा म्लेच्छजातयः"।

इत्यमरकोशः। अन्ये तु 'कुमारिकाषण्डवर्ज्जितगम्याः वर्णव्यवस्थाविरहिता अनार्य्याः' इत्याहुः। अन्यत्पूर्व्वमुक्तम्। परस्परोपकार्य्योपकारित्वं विना सामाजिकोन्नतिः कार्य्यसम्बन्धिप नशात्। ऋ गतौ, अर्य्यते। अर्त्तुं योग्यो वा। 'ऋहलोर्ण्यत्' इत्यादिना सिद्धम्। आर्य्यविरुद्धोऽनार्य्यः। कुत्रचित् 'उपकारो नास्तिकानादरेषु कर्त्तव्य.' इत्थं सूत्रान्तरमस्ति। तदा तु कार्य्यासम्भवविशेषे दयया तेषूपकारः कर्त्तव्यो नापि सर्व्वदा इत्यर्थः॥ ७॥

अतिक्रूरस्वभावत्वेन प्रत्युपकारमकृत्वानार्य्यो वैरं करोति इत्यत आह प्रत्येति। उपकर्त्तुर्विपदुद्धारणं प्रत्युपकारः अति-मुदायकत्वमिति यावत्। तद्भयात् प्रत्युपकारकरणभया-

**स्वल्पमप्युपकारकृते प्रत्युपकारङ्कर्त्तुमार्य्यो न स्वपिति ॥ ९ ॥**

---

दनार्य्यः प्रकृतरातिः स्यात्। स च विपरीतबुद्ध्या प्रवञ्चकतया भवः सततनिष्टमाचरति। यथा भुजगो दुग्धं निपीय गरलं वमति तद्वत्। सज्जनो नैव तादृक् करोति। तदुक्तं नीतौ—

"उपकारशतेनापि दुर्जनः केन गृह्यते"।

न केनापि ग्रहीतुं शक्यते इत्यर्थः। अत उक्तं—

"दुर्जनः परिहर्त्तव्यः सद्गुणैर्मण्डितोऽपि सन्"। इति।

उप अधिकं करोतीति कर्म्मण्यम्। यद्वा उपकरणमुपकारः उपपूर्व्वात् करोतेः घञा सिद्धः॥ ८॥

आर्य्यस्य प्रत्युपकारकरण स्वाभाव्यमाह स्वल्पमपीति। आर्य्य सत्यनिष्ठः कुलीनो न्यायपरायणः। स्वल्पमपि उपकारम् इच्छता पुंसा तेन कृते उपकारे प्रत्युपकारं प्रतिहिताचरणं कर्त्तुम्। न स्वपिति। शिष्टस्वाभाव्यात् नैव निद्रां याति। परं प्रत्युपकाराय आर्य्यः सततं जागर्त्तीति भावः। 'स्वल्पकृतमप्युपकारं प्रत्युपकर्त्तुमार्य्यो न स्वपिति'। द्वैध्ये पाठभेदेऽप्यर्थो विशद एव। 'किञ्चिदल्पं क्षुद्रमितं स्तोकमात्रमिति'। 'स्तोकाल्पक्षुल्लकाः' इत्यमरोऽपि।

"हितानुकूलोपकाराय साहाय्ये दुःसहाः सदा"।

स चोपकारः आर्थिक शारीरिक वाचनिक मानसिकभेदेन

**न कदापि देवता अवमन्तव्या ॥ १० ॥**

**न चक्षुः समं ज्योतिरस्ति ॥ ११ ॥**

---

चतुर्विधः। धनदानेन, परिश्रमेण, हितवाक्येन, इष्टचिन्तया चेति ॥ ८ ॥

देवानां गुर्वादीनाञ्चापमानकरणनिषेधमाह नेति। कदापि कस्मिंश्चित्काले देवता देवा अमराः। तादृशा लोकाश्च। ते नावमन्तव्याः। अत्र देवता इत्युपलक्षणम्। अन्ये तत्तुल्या लोका तादृशानि कार्य्याणि च ज्ञेयानि। केनापि पुरुषेण ते नावमन्तव्याः प्रमादादस्मादा तुच्छोऽत्य न लङ्घितव्याः। देवतादृश-लोक-तत्कार्य्याणामवमानं कदापि न कार्य्यमिति भावः। तत्करणे स्वस्य परस्य च हानं स्यात्। तथा च 'न च देवात् परं अन्यम्' इति। 'न कदाचिद्देवतागुरुब्राह्मणा अवमन्तव्यानि' इति तत्र पाठे तु देवो नृपो गुरुजनश्च। एतेषां ये आदेशाः यानि च कार्य्याणि तानि नावमन्तव्यानीति। तदन्ते दुर्गत्या सदाचरणहानिः स्यात्। दैवगत्वात् स्यायं तत् ॥ १० ॥

भासमाना नेत्रज्योतिभिः समानमन्यज्ज्योतिर्नास्तीत्याह नेति। चक्षुर्नयनं नेत्रमिति दर्शनेन्द्रियमिति च कथ्यते। चक्षु दर्शने तत्समं तुल्यमन्यज्ज्योतिर्वस्तु रूपदर्शनार्हं नास्ति। चक्षुरिन्द्रियेण लोको हि सर्वं द्रष्टुं शक्नोति। यस्य तु तन्नास्ति स चान्धः बहिरन्तः लोकालोकेन किमपि द्रष्टुं नार्हति

## चक्षुर्हि शरीरिणां नेता ॥ १२ ॥

विनापि दर्शनशक्त्या । अतश्चक्षुर्महता यत्नेन रक्षणीयम् । तदुक्तं नीतौ 'न नेत्रहीनः कनकाद्यलङ्कृतः' इति । रसधेवन-शोणित-शुक्र-विक्षत्यत्युदरामय-पैत्तिक-संक्रामक-रोगादि-दोषैर्नेत्रस्य दृष्टि-हानिः प्रजायते । अन्यदस्ति वैद्यके माधवकरीये निदाने च । 'नेत्रमीक्षणनयने चक्षुर्दर्शनमक्षि च' इति कोषः ॥ 'चष्टे' पश्यते-ऽनेन वा । चक्षिङः धातोः 'चक्षेः शिच्च' इत्यौणादिकसूत्रादुसिः शित्त्वा दनाद्धधातुकत्वात् ख्याञादेशो न भवति ॥ ११ ॥

पूर्वसूत्रे नेत्रज्योतिषः श्रेष्ठत्वमुक्ता अस्मिन् सूत्रे जीवाना-मस्य नेतृत्वमाह चक्षुरिति । चष्टेऽनेनेति । शरीरिणां प्राणिनां सर्वेषाम् । हि निश्चितम् । नेता नायकः । सर्व्व-कर्म्मसु दर्शनशक्त्या प्रेरकोऽन्धकारे आलोके च परिचालकः । यस्य चक्षुषी नष्टः सोऽन्धः । यस्यैकं चक्षुर्नास्ति सः काणः । यथा हि नेता सर्व्वान् कर्मचरान् हितकारकर्म्मसु चालयति तथा चक्षुर्दृष्टिमतः लोकान् जगति स्वशक्त्या रूपग्रहणादौ प्रेरयतीति भावः । शरीरान्तः सूक्ष्मस्नायु-प्रवाहिताक्षिगोलका-न्तर-कृष्णतारकाग्रवर्त्ति-रूपग्रहण तेजोवस्तं चक्षुस्त्वमिति । पित्तादिवैषम्ये ओजःक्षये मस्तिष्कक्षये च चक्षुर्दर्शनशक्तिहानं स्यात् । तथा च वैद्यके—

"तथा ऋतूनाञ्च विपर्य्ययेण,
क्लेशाभिघातादतिमैथुनाच्च ।

अपचक्षुषः किं शरीरेण ॥ १३ ॥

नाप्सु मूत्रं कुर्य्यात् ॥ १४ ॥

---

वाष्पग्रहात् सूक्ष्मनिरीक्षणाच्च,
नेत्रे विकारान् जनयन्ति दोषाः" ॥

मांस-विमलखोर-नवनीत-प्रविभेदनेन सद्कृतिर्वदेत्। 'ज्योतिः स्त्री दिवाकरे। पुमान्, नपुंसकं दृष्टौ व्यायधत्र प्रकाशयोः' इति मेदिनी ॥ १२ ॥

दर्शनशक्तिशून्य चक्षुषो जनस्य शरीरधारण-भारो दुर्व्विषह इत्याह अपेति। अपचक्षुषः दर्शनशक्ति-विरहित-नेत्रस्य। शरीरेण देहेन किम्। तेन न किमपि कार्य्यं सिध्यति। चाक्षुषविज्ञानं यावत्मित्र भवति। तदुक्तं विष्णुना—

"काणेन चक्षुषा किंवा चक्षुः पीडैव केवलम्"।

चक्षुर्यदन्येषामपि करणानामपाटवे तद्वैकल्यं स्यात्। तथाच—

"वाधिर्य्यं कुनितान्धत्व जड़ता जिघ्रता तथा।
मुकता कौण्य-पङ्गुत्वं क्लैव्योदावर्त्तमन्दता:" ॥

इति तत्त्वकौमुद्या ज्ञानकर्म्मेन्द्रियाणां अशक्तिमानमुक्तम्। अपचक्षुस्त्वमाह वैद्यके—

"वातात् पित्तात् कफाद्रक्तादभिष्यन्दश्चतुर्विधः।
प्रायेण जायते घोरः सर्व्वनेत्रामयाकरः" ॥

अपचक्षुष, सकलवस्तुदर्शनविरहेण शरीरभारः क्लेशप्रद इति। पदनिरुक्त्यादिकं पूर्व्वमुक्तम् ॥ १३ ॥

न नग्नः प्रविशेज्जलम् ॥ १५ ॥

---

सम्प्रति विषयान्तरमवतारयन् सलिले मूत्रत्यागपरिहारमाह नेति। अप्सु सलिलेषु। स्वभावतः स्वच्छे वारिणि मूत्रं प्रस्रावः उपस्थ-निर्गतवारि। न कुर्यात्त्यजेदित्यर्थः। तदुक्तं धर्म्मशास्त्रकृता मनुना—

"न मूत्रं पथि कुर्व्वीत न भस्मनि न गोव्रजे।
न फालकृष्टे न जले न चित्यां नच पर्व्वते॥
न जीर्णदेवायतने न वल्मीके कदाचन"। इत्यादि।

देहनिर्गतदुष्टपदार्थलेन च जलं दुष्टं विषाक्तं भवति। तत्पाने रोगोत्पत्तिः स्वास्थ्यनाशश्च। एवं राजमार्गे देवालये गोष्टहे परिषदि वासगृहे श्मशाने तीर्थे विचार-विद्यागारे मूत्रं न त्यजेत्। नच तद्वेगधारणं कुर्य्यात्। तद्वेगधारणे रोगसम्भावना प्रबला। दण्डायमानस्य वारिपाने मूत्रत्यागे च मुष्कस्फीत्यरोगो भवति। गोमूत्रस्य निक्षेपे मूत्र-दुर्गन्धमयस्थाने तद्विषदोषं नश्यति। मूत्र प्रस्रवणे, मूत्रते। ततो घञ्। अप्स्विति। आप् व्याप्तौ, आप्नुवन्ति आप्यन्ते वा। 'आप्नोतेर्ह्रस्वश्च' इति क्विप्। ह्रस्वत्वञ्च॥१४॥

अपरिहिताम्बरस्य जलप्रवेशे जलजन्तुदंशनभयात्तन्निषेधमाह नेति। नग्नो विवसनो जलं वारि। न तस्मिन् विशेत् नापि निमज्जेत् अवगाहेत। तादृशजनस्य जलावमज्जने जलजावैराक्रमणसम्भवः सलिलस्वच्छतापि विनश्यति। एवं नग्नः सन्

## यथा शरीरं तथा ज्ञानम् ॥ १६ ॥

## यथा बुद्धिस्तथा विभवः ॥ १७ ॥

---

मार्गे गमनं भोजनं शयनमपि न कुर्यात् । 'नग्नो वन्दि-क्षपणयोः पुंसि त्रिषु विवाससि' इति विश्वः । कौर्मे च—

"न नग्नां स्त्रियमीक्षेत पुरुषं वा कदाचन ।
न च मूत्रं पुरीषं वा न च संसृष्टमैथुनम् ॥
नोच्छिष्टं संस्पृशेच्चित्यं न नग्नः स्नानमाचरेत् ।
न गच्छेन्न पठेच्चापि न चैव स्वशिरः स्पृशेत्" ॥ इति ।

ओलस्जी व्रीडे, लज्जते । ओदित्त्वात्ततः क्तः । 'ओदितश्च' इत्यनेन नत्वं स्यात् ॥ १५ ॥

शारीरिकशक्त्यनुसारि-ज्ञानमाह यथेति । यथा यादृशं शरीरं देहस्तत्सामर्थ्यञ्च तादृक् । तथा ज्ञानमपि विषयेन्द्रियसन्निकर्षजन्यं यच्चात् लोकस्य भवति । शरीरपरिमाणान्नाधिकं न वा न्यूनम् । यद्वा ज्ञानं बुद्धिः । शरीरे पुष्टे सम्यक् सुस्थे ज्ञानमपि प्रखरं पुष्टञ्च भवति । विपुष्टे क्षीणे रुग्णे च ज्ञानञ्च तथैव प्रकाशते, शारीरिक वैकल्यात् ज्ञानं वर्द्धते । तज्ज्ञानं नानाविधम् । यथा-विषयज्ञानम् । शिल्पशास्त्रयोर्विज्ञानम् । पदार्थतत्त्वसूक्ष्मयोर्घर्षण सत् संयोगवियोगाभ्यामभिनवपदार्थाविष्करणं विज्ञानम् । ईश्वरविषये तत्त्वज्ञानम् । अतस्मिन् तद्बुद्धिर्मिथ्याज्ञानञ्च । 'नहि ज्ञानेन सदृशं पवित्रमिह विद्यते' इति सर्वथा ज्ञानप्रागल्भ्यमुक्तम् । ज्ञा अवबोधने । जानातेः कर्मणि ल्युट् ॥ १६ ॥

## अग्नावग्निं न निक्षिपेत् ॥ १८ ॥

लोकानां बुद्ध्यनुसारेण विभवः स्यादित्याह यथेति । बुद्धिः धीशक्तिर्मनीषेति । सा यस्य यादृशी भवति, प्रखरा मलिना वा । तस्य विभवः सम्पत्तिर्विपुलधनं लोके तादृशं भवति । मतिमान् स्वमति-प्राखर्य्यात्तद्बलेनाधिकं धनमर्जयति । मति-हीनः सञ्चितमपि वित्तं परिहरति । तदुक्तं कौटिल्यैरस्यावसरे—

'बुद्धिरेव जयत्येका पुंसः सर्व्वार्थसाधिनी ।

यद्बलादेव किं किं न चक्रे चाणक्यभूसुरः' । इति ।

शिक्षासौशील्य-सत्सङ्गैः लोकस्य बुद्धेः प्राखर्य्यम् । तेन धन-मानादेरागमः सुकरः स्यात् । मूढस्य न तत् स्यात् । 'बुद्धि-र्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः' इत्यमरः । बुधिर् बोधने, बुध्यते अनया इत्यतः क्तिन् । विपूर्व्वात् भवते रपा विभव इति ॥ १७ ॥

प्रज्वलिताग्नौ पुनरग्निनिक्षेपस्य निषेधमाह अग्नाविति । अग्नौ वह्नौ वैश्वानरे च । प्रज्वलिते पुनरग्निनिक्षेपणं वृथा भवति । तद्द्विगुणः सन् स्वस्यान्यस्य च दाहं करिष्यतीति । यद्वा जले जलप्रक्षेपवत्तस्य वैयर्थ्यञ्च । अथवा पानोन्मत्तस्य रागा-न्धस्य च पानसाहाय्यं क्रोधवर्द्धनञ्च यथा नोचितस्तथा पुनरग्ना-वग्निक्षेपो नोचित इति । 'अग्निर्वैश्वानरो वह्निः' इत्यमरः । अग्निः । अगि गतौ, अङ्गति । ततोऽङ्गेर्नेलोपश्च । इत्यौणा-दिकात्निर्न लोपश्चेति । क्रुद्धस्य क्रोधशान्त्यै, सुरासक्तस्य च तन्निवृत्तौ सदा यतितव्यं न तद्वर्द्धनाय । तदुक्तम्—

## परदारान् मनसापि न गच्छेत् ॥१९॥

## तपस्विनः पूजनीयाः ॥२०॥

---

"कामिनीं धर्षयन् कामान् लोभं सुश्रुस्य वर्धयन् ।
नरः किं फलमाप्नोति कूपेऽन्धमिव पातयन्" ॥

मौर्वी धैर्यमेव प्रगल्भताम् ॥ १८ ॥

सम्प्रति विषयान्तरोदाहरणच्छलेनाह परेति । परेषां लोकानां दारान् पत्नीः पाणिगृहीतीरिति । मनसा चित्तेन सङ्कल्पा सङ्कल्पालोचनप्रसङ्गेन च । यद्वा रिरंसया रूपलावण्य-सौन्दर्यचिन्तया च न गच्छेत् नाभिरमेत् । सर्वेन्द्रियव्यापारा-मनोव्यापारपूर्विका भवन्तीत्यत उक्तं मनसेति । मानसिक-चिन्तयेन्द्रिय-चाञ्चल्य सम्भावना तच्छक्तिह्रासश्चेति । उक्तञ्च राजनीतौ—

'परीवादं परस्वेच्छां परदाराभिमर्षणम् ।
परपीडनमपि पापञ्च न कुर्वीत कदाचन' ॥ इति ।

मत्यन्यानि धर्मशास्त्रे प्रतिषेधसूचकवचनानि । तत्कृते स्वास्थ्य-सत्य-चरित्र-चित्तप्रागल्भ्यानां हानमवश्यं स्यात् । दाराः, दृ विदारणे, दारयन्ति भ्रातॄन् इति निरुक्तः । 'दारजारौ कर्त्तरि णिलुक् च' इति वार्त्तिकाद् घञ् । मन ज्ञाने, मन्यतेऽनेनेति असुन् । तेन मनसा ॥ १९ ॥

परमेशध्यानपरायणानामाराधनेन कल्याणमाह तपस्विन इति । तपस्विनः सन्न्यासिनो योगिन इति । ईदृशा ये, ते

## अन्नदानं भ्रूणहत्यामपि मार्ष्टि ॥ २१ ॥

लोकानां पूजनीयाः अर्हणीयाः भक्तिभाजना इति यावत् । नतु वेशमात्रधारिणः केवलं गैरिक-काषायाम्बरधारिणः । यथार्थ साधवः कल्याणाय तपसः षड्भागं लोकेभ्यो वितरन्ति । तेषां तपश्चरणेन आशिषा च सामाजिका निरापदो भवन्ति । अतः सन्यासिनो महनीयाः । यत्र तपश्चरन्ति तत्र तपो माहात्म्यात् भुजग नकुलयोर्विरोधाभावः । देशस्तु क्षोभरहितः आधिव्याधि-हीनः शान्तिपूर्णः स्यात् । तदुक्तं मार्कण्डेयपुराणे—

"प्रशान्त-श्वापदाकीर्णं मुनि-शिष्योपशोभितम्" ।

मुनिवर्य्यस्य मेधसस्तपोवनमीदृशमासीदित्यर्थः । तपस्वि-भिक्षु-दण्डि प्रभृतीनां दर्शनेन पुण्यं प्रजायते । बुद्धिरपि ताहशी समु-देति । 'तपस्वी तापसे चानुकम्प्ये' इति मेदिनी । तपः कृच्छ्र-चान्द्रायणादीनि कर्म्माणि । तदस्यास्तीति 'तपः सहस्राभ्याम्' इति विनिः ॥ २० ॥

अन्नदानमाहात्म्यमाह अन्नदानमिति । अन्नानां क्षुन्निवर्त्तका-दनीयद्रव्याणां दानमन्यस्मै वैधार्पणम् । देवविप्र ब्रह्मचारि-विद्यार्थिसाधु-दीनान्धातुर-पङ्गु-निःसहायेभ्यो निजधनस्य प्रीत्या समर्पणम् । तथा च श्रुतिः 'दानेन द्विषन्तो मित्रा भवन्तो'ति ।

"अन्नेन धार्य्यते सर्व्वं जगदेतच्चराचरम् ।
अन्नदानात् परं दानं न भूतं न भविष्यति" ॥

## न वेद-बाह्यो धर्मः॥ २२॥

---

"कलौ अन्नगत-प्राणाः न बुद्धिरन्नजीवनम्"।

'अन्नाद्भवन्ति भूतानि'। 'हष्टेरन्नं ततः प्रजाः'। इत्यादि स्मृतयश्च। अन्न-गुणाश्च 'तुष्टि-बल-प्रीति-पुष्टिधातिन्द्रियबलकारित्वं जीवनयशःकत्वं गुरुत्वं क्षुधाक्षय-रोग-श्रम-कार्श्यनाशित्वं पथ्यत्वञ्चेति। पुराण-नवीन-शीत-पर्युषितभेदेन अन्नानां गुणतारतम्यमस्ति। सामिषामिषनिरामिषाद्यं नैकप्रकारमायुर्वेदकाश्चेति। भ्रूणस्य गर्भस्य हननं विनाशश्च। तज्जनितं पापमपि महदिति। अन्नदानेन तत् प्रणश्यति। अद् भक्षणे, अद्यते। अदः क्तप्रत्ययः। 'अन्नाण्' इति निपातनात् सिद्धम्। 'बहुलं तणि' इति वार्त्तिकात् अदः स्थाने न जग्ध्यादेशः। 'भ्रूणो गर्भेऽर्भके क्लीबे स्त्रैणी पनस तण्डके' इति मेदिनी। 'भ्रूण आशा विशङ्कयोः' इत्यन्यत्र च। भ्रूणति, घञा सिद्धः। सूत्रादौ 'यथा चरितमिति' क्वचित् पाठः। सूत्रार्थः सुगमः॥ २१॥

धर्मस्य वेदबाह्यत्वे निषेधमाहनेति। वेदाश्चत्वारः। ऋक्साम-यजुरथर्वाणः। तेषां शिक्षाद्योऽङ्गानि षट्। उपवेदाश्चत्वारः। आयुर्वेद-धनुर्वेद-गान्धर्वार्थशास्त्राणि। एते साङ्गोपाङ्गवेदाः। स्मृतीतिहासपुराणानि वेदमूलकानीति। बहिर्भवो बाह्यः। वेदेभ्यो बाह्यो वेदबाह्यः। वेदविरुद्धः। तादृशो धर्मो नाचरणीयः। वेदमूलको धर्मोऽनुष्ठेयः। तथाच—

"वेद-प्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः"। इति।

## न कदाचिदपि धर्मं निषेधयेत् ॥२२॥

मनुना च—"या वेदबाह्याः स्मृतयः याश्च काश्च कुदृष्टयः" । वेदबाह्याः स्मृतयश्चार्वाकादीनां नास्तिकानाम् । सर्व्वेषां धर्म्मादिविषयाणां साङ्गोपाङ्ग-वेदमूलत्वेऽपि धर्म्म-दर्शन-चिकित्सा-ज्योतिष-मन्त्र-नीतिशास्त्राणां सिद्धान्तस्योद्देश्यगतपार्थक्यमस्त्येव । तेनेश्वरे कस्यापि विप्रतिपत्तिर्नास्ति । लोकविधारकोऽभ्युदय निःश्रेयससिद्धिप्रदो धर्म्मः । शास्त्रयोनित्वाधिकरणे ऋग्वेदादेः शास्त्रत्वमुक्तम् । गीतायाञ्च शास्त्रविध्यनुसारेण धर्म्मानुष्ठाने ऐहिकविभिन्नसुखं पारलौकिकपरागतिश्चोक्ता, तद्विरुद्धानुष्ठाने तयोरभावः । प्राङ्निगदितमन्थत्, कोप-पदमित्यत्र प्रायुक्तस्तः ॥ २२ ॥

धर्म्मविरुद्धाचरणे प्रतिषेधमाह नेति । धर्म्ममभ्युदय-निःश्रेयसि-कारणं वेद-स्मृति-पुराणेतिहासविहितम् । कदाचिदपि क्रोध-द्वेषानादरभयेष्वपि कस्मिंश्चित्कालेऽपि । न निषेधयेत् नापि प्रतिषेधयेत्तद्विरुद्धाचरणं कुर्यात् । सदा तं कायमनोवाग्भिः सर्व्वात्मना स्वनुपालयेत् । तदुक्तं भारते विदुरनीतौ—

"न जातु कामान्नभयान्नलोभा-
द्धर्म्मं त्यजेज्जीवितस्यापि हेतोः" ।

यतश्च 'धर्म्मेण हीनाः पशुभिः समानाः' । धर्म्महीना लोका पशुवत् काम लोभ-क्रोधपरायणाः परस्परम् आक्रमन्ति निर्दयाः स्वार्थान्धाश्च स्युः तेन समाजेषु चिराशान्तिः । मनुना च—

## स्वर्गं नयति सूनृतम् ॥२४॥

'एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः।
शरीरेण समं नाशं सर्वमन्यत्तु गच्छति'॥

सदा जीवितकाले यदि धर्मानुष्ठानेऽशक्तस्तदा कस्मिन्नपि काले-ऽवश्यमनुष्ठेयः। धार्मिकः सन्तुष्टः परहितरतो मान्यो लोके प्रशंसार्हश्च भवति। अधार्मिके विश्वासाभावः। 'कदाचिदपि धर्मं निषेवेत' इत्यपि पाठान्तरमस्ति। तदा तु कस्मिंश्चित्काले धर्माचरणं कुर्य्यात्। प्रागुक्तमन्यत् ॥ २३ ॥

प्राग्धर्मसंरक्षणे प्रयोजनमुक्त्वा सम्प्रति तत्फलमाह स्वर्गमिति। सूनृतं सम्यक् सत्यम्। तच्च धर्माचरणजनितं फलम्। सत्यपरं लोकं स्वर्गं निर्विशेषसुखस्वरूपमसमस्थानं नयति प्रापयति। तदुक्तं श्रुतौ—

'सत्यमेव जयते नानृतम्,
सत्येन पन्था विततो देवयान ।
येनाक्रमन्त्यृषयो ह्याप्तकामाः,
यत्र तत् सत्यस्य परमं निधानम्'॥

काठके—

'स्वर्गे लोके न भयं किञ्चनास्ति,
न तत्र त्वं जरया बिभेति।
उभे तीर्त्वा अशनायापिपासे,
शोकातिगो मोदते स्वर्गलोके'॥

सत्याद्देवो वर्षति ॥ २८ ॥

---

इवर्धीयति। सत्यं यदि विलुप्तं स्यात् तदा सर्व्वमाकुलमेव भवति। तदुक्तं वृद्धचाणक्ये—

"सत्येन धार्य्यते लोकः सत्ये सर्व्वं प्रतिष्ठितम् ।
सत्यात् स्वर्गमवाप्नोति ह्यसत्येन विनश्यति" ॥

भारते राजधर्म्मे च—

"सत्यञ्च समता चैव दमश्चैव न संशयः ।
अमात्सर्य्यं क्षमा चैव ह्रीस्तितिक्षाऽनसूयता ॥
त्यागो ध्यानमथार्य्यत्वं धृतिश्च सततं दया ।
अहिंसा चैव राजेन्द्र ! सत्याकारास्त्रयोदश ॥
कीर्त्तिर्यशश्च पुण्यञ्च पितृदेवर्षि-पूजनम् ।
आद्यो विधिश्च विद्या च सर्व्वं सत्ये प्रतिष्ठितम्" ॥

सर्व्वमन्यदाम्नेये वाराहे गारुड़े ब्रह्मवैवर्त्ते च पुष्कलमस्ति। विस्तरभिया त्वत्र नोक्तम् ॥ २७ ॥

सत्यपालनफलमाह सत्यादिति। सत्यपरायणा हि दान-यज्ञ-तप आदिभिर्देवाराधनं नियतं कुर्व्वन्ति। तेन देवः प्रसन्नः सन् काले वर्षति। तदुक्तं मनुना—

"आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा" ॥ इति।

गीतायाञ्च—

'अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः' ।

## नानृतात् परं पापम् ॥ २८ ॥

यज्ञधूमान्मेघा मेघाद्वृष्टिः वृष्टेरन्नं ततः प्रजाः । ज्योतिषे च—

"ग्रहाणामुदये चास्ते तथा वक्रातिचारयोः ।
प्रायो वर्षन्ति जलदा नृपाणामुद्यमेऽपि च" ॥
"वारिपूर्णां महीं कृत्वा पश्चात् संक्रमते गुरुः" ।

इति च तत्रैवास्ति ।

"देवः सुरे घने राज्ञि देवमाख्यातमिन्द्रिये" ।

इति विश्वः । दीव्यन्तीति देवाः । पचादिषु पाठादच् ॥२८॥

अनृतस्य पापजनकत्वमाह नेति । ऋतं न ऋतमनृतम् । अनृतं मिथ्येति । अनृतादसत्यात् परं प्रधानं पापं दुरितं नास्ति । यदानृतमाचरति स सर्वं पापं कर्तुं शक्नोति । असत्याचरणशीलेऽशेष पापं क्रमशः सम्भविष्यति । 'अनृतं कृषिः । वितथं त्वनृतं वचः' इत्यमरः । नीतिविषयविशेषेषु सर्वं सत्यानृतमिथुनीभूतम् । तत्र विवेकसम्पन्नेन पुंसा क्षीरनीरयोर्हंस इव सत्यमादाय कार्यं सम्पाद्यमिति । विशेषस्तु भारते कर्णपर्वणि—

"विवाहकाले रतिसंप्रयोगे,
प्राणात्यये सर्वधनापहारे ।
विप्रस्य चार्थे ह्यनृतं वदेत,
पञ्चानृतान्याहुरपातकानि" ॥

न मीमांस्या गुरवः ॥३०॥

खलत्वं नोपेयात् ॥३१॥

---

अतः अनिष्टतो हिताधिकारीतिनियमानुसारेण विधाहादिपक्षकेषु अन्तरायमं न पापजनकमिति ॥ २८ ॥

गुरूणां ज्ञानगुणवयोवृद्धानां वचांसि कार्याणि च अमीमांस्यानीत्याह नेति। गुरवः शिक्षकाः ज्ञानधर्मोपदेष्टारः अचार्या इति यावत्। ते न मीमांस्याः 'पूजितविचारवचनो मीमांसाशब्दार्थः' इति भामती। विप्रतिपत्तौ सम्प्रदायान्तो मीमांसा। अन्यत्र जैमिन्यादिप्रणीतदर्शने वेदादिवाक्यानामविरोधापादानं विचारणा चेति। मीमांसनयोग्याः मीमांस्याः। न तेषु तेषामनुष्ठितकार्येषु च। मत्समतीनां गुणा दोषाश्च विचार्याः। प्राज्ञानां समीक्ष्यकारिणां गुणदोषविचारोऽक्लेनैव कार्यः। उक्तञ्चाप्युक्त'आज्ञा गुरूणां ह्यविचारणीया' इति। प्राज्ञानां कार्ये अप्रदोषप्रदर्शने कार्यव्याघातोऽशिष्टाचरणमपि वर्तते। प्राज्ञाः सूक्ष्मबुद्धया कार्याणि विधास्यन्ति, तैः प्राकृतजनदोषप्रदर्शनमुपेक्षणीयम्। यतः मेघध्वनिश्रवणात्परं पञ्चाननो गर्जति न हि बहुगोमायुरुतश्रवणात् परमिति ॥ ३० ॥

दुराचरण-शीलत्वस्य निषेधमाह खलत्वमिति। खलत्वं कलह-शीलत्वं दुर्जनत्वमिति यावत्। नोपेयात् लोकैः सार्धं वृथा पैशुन्यादिकं नाचरेत्। यस्तु स्वभावतो दुर्जनस्तस्य

## नास्ति खलस्य मित्रम् ॥३२॥

प्रतिक्षणं विपदापतति, अपरमपि विडम्बयति। 'पिशुनो दुर्जनः क्रूरः खलो दुःशील इत्यपी'ति व्याडिः। 'खलः कल्के भुवि स्थाने क्रूरे वार्णे जपेऽधमे' इति मेदिनी च। 'कलहं नोपेयात्' इत्यपि पाठान्तरमस्ति। तदाऽपि अर्थः सुगमः। कविसमयश्च—

'न दुर्जनः सज्जनः स्याद् भुजङ्ग-मञ्जलिर्यतः।
उपकारत्फलेनैव पश्चाद् दुःखं प्रदास्यति'॥

खल सञ्चये, खलतीत्यतोऽचा सिद्धम्। यद्वा खं छिद्रं लाति यः स खलः। सदा परच्छिद्रानुसन्धानपूर्वकं विपदतीति भावः। खलस्वभावस्य बन्धुत्वाभावमाह नेति। खलस्य दुर्जनस्य मित्रं सखा नास्ति। सर्वैः सार्धं प्रीतिपूर्वव्यवहाराभावात्। तादृशे व्यवहारे सति खलत्वस्यावसराभावः। यतः—

'व्यवहारेण जायन्ते मित्राणि रिपवस्तथा'। इति।

सद्व्यवहारे सौहृदं, दुर्व्यवहारे वैरित्वञ्च भवति। उक्तञ्च नीतिनिपुणैः—

'दुर्जनेन समं सख्यं प्रीतिञ्चापि न कारयेत्'।

इति प्रागुक्तमन्यत्।

'नास्तिकलहस्य मित्र'मिति पाठान्तरत्वे कलहस्य तत्प्रियस्य लोकस्येत्यर्थः। अत्र कलहोऽस्यास्तीति अर्शं आदित्वादच्।

**लोकयात्रा दरिद्रान् बाधते ॥३३॥**

**अतिशूरो दानशूरः ॥३४॥**

---

'कलह-विग्रहौ' इत्यमरः । 'कलस्तु मधुरध्वनौ' इति धरणिः । कलस्य हननम् । अन्येभ्योऽपि इति वार्त्तिकात् डप्रत्ययः ॥३२॥

निःस्वस्य लोकसमागमः पीडादायकस्तमाह लोकेति । लोकयात्रा लोकानां समागमः । स्वगृहे अतिथिजनागमः । यद्वा उत्सवः बहुसम्मेलनम् । दरिद्रान् निर्धनान् लोकान् सा बाधते । निरन्तरं धनाभावात् क्लिश्नाति । दरिद्रास्तु समागतलोकानां स्नानदानपानभोजनादिभिः परितोषजनने असमर्था भवन्ति । अतस्ते दुःखिताः क्लिश्नन्ति । 'यात्रा तु यापनेऽपि स्यात् गमनोत्सवयोः स्त्रियाम्' इति मेदिनी । धनवन्तस्तु लोकयात्रानृत्योत्सवैरानन्दमधियन्ति । उक्तञ्च वृद्धैः—

'लोकयात्रा विवाहश्च उत्सवो बान्धवागमः ।
गीतं नृत्यं देवसेवा धनिकानान्तु शोभनम्' ॥

या प्रापणे, यानम् । 'हु या मा श्रुभसिभ्यस्त्रन्' इति याते स्त्रन् । स्त्रियामाप् । दरिद्रा दुर्गतौ, दरिद्राति । ततः पचाद्यच् ॥३३॥

धनदातुर्वीरश्रेष्ठत्वमाह अतीति । दान-शूरः । शूरो दाने सदुद्देशे स्वधनस्य सम्यग्त्यागे । यद्वा धर्मार्थे स्व-स्वत्वध्वंसपूर्वकपरस्वत्वापादानकर्मणि । तत्र शूरो वीरः वदान्यः । अतिशूरोऽधिकश्रेष्ठः, वीरो दैहिकबलात् शौर्य्यमात्रं प्रकटयति । दानशूरश्च

भूषणं गुरु-देव-ब्राह्मणेषु भक्तिः ॥३५॥
सर्व्वस्य भूषणं विनयः ॥३६॥

---

दान-बाहुल्येन बहूनां जीवनरक्षणं धर्म्मादिकार्य्यञ्च सम्पादयति यतो वीरादपि श्रेष्ठः। दानशूरः सततं दीनदुःखापहारको हित-कामिकश्चेति भावः। 'शूरोवीरश्च विक्रान्तः'। 'शूर वीरविक्रान्तौ' शूरयति। इत्यस्मादचा सिद्धः। प्रागुक्तमन्यत् ॥३४॥

सज्जनस्याभरणमाह भूषणमिति। गुरुराचार्य्यो ग्रामदाता। विद्या-सम्बन्ध-वयोज्येष्ठश्चेति। देवः परमेश्वर इन्द्रादिश्च। ब्राह्मणो विप्रो वर्णज्येष्ठ इति यावत्। स चादिवर्णो ब्रह्ममुखजः तपः श्रुतिसम्पन्नः। तत्र 'ब्राह्मणोऽस्य मुखमासीत्' इति श्रुतिः। 'तपः श्रुतिश्च योनिश्च त्रयो ब्राह्मण-कारण'मिति स्मृतिश्च। एषु श्रेष्ठेषु सङ्गनाम्पदेषु भक्तिः परानुरक्तिः सेवानुरागश्चेति। 'सा त्वीश्वरे परानुरक्तिः' इति शाण्डिल्यसूत्रे भक्तेर्लक्षणम्। सा प्रसिद्धा, चित्तस्य निर्विशेष सात्त्विकी वृत्तिः। ईश्वरे भगवति उपास्ये। परानुरक्तिरत्युत्कटोऽनुराग इत्ययं सूत्रार्थः। सज्जनानां भूषणमलङ्कारः। तेन च लोकाः शिष्टाः शिक्षिताः सन्तो विनम्रा भवन्ति। तथैव धन-गुण-वृद्धे नृपे चानुरक्तिः कार्य्येति। 'विप्रश्च ब्राह्मणः' इत्यमरः। ब्रह्मणोऽपत्यम्, तस्यापत्यमित्यण्। अनित्यत्वेन टिलोपो न भवति। यद्वा ब्रह्माधीते 'तदधीते तद्वेद' इत्यनेन च अणा सिद्धः। प्रागुक्तमन्यत् ॥ ३५ ॥

लोकानां व्यवहार-निर्वाहाय विशेष-भूषणमाह सर्व्वस्येति।

आचारवान् विनीतोऽकुलीनोऽपि चार्य्यः॥३७॥

सर्व्वस्य जनस्येति जातावेकवचनम्। सर्वेषामिति व्यक्तिभेदेन प्रयोगः साधुः। भूषणमलङ्कारः। विनयो नम्रता सौशील्यमिति। विनय-तुल्यो गुणो दुर्लभः। विनयिनः शत्रुर्विरलः। विनयेनापदो व्यतीता भवति तेन च व्यावहारिके विषये सर्वे वश्याः स्युरिति। 'विनीतस्तु निभृते निर्जितेन्द्रिये वाणिज्ये साधुवाह्यश्वे विनयग्राहिते त्रिषु' इति हैमः। प्राग् व्याख्यातमन्यत् ॥३६॥

आयमानुसारेण विनयाचार-पालने कुलीनत्वाभावेऽपि आर्य्यत्वमाह एति। अविनीतो विनयरहितः उद्धतः। अकुलीनोऽनुच कुलजातोऽपि जनः यद्याचारवान् संयतोभवेत्तदा आर्य्यः श्रेष्ठः स्यात्। सदाचारविनय-विहीन आर्य्योऽपि अनार्य्य-सदाचरणे समर्थः दु ग्रोलत्वात्। अत आचारविनययोः कौलिन्ये हेतुत्वमुक्तम्। 'महाकुल-कुलीनार्य्य सभ्य-सज्जन साधवः' इत्यमरः।

'अकुलीनोऽपि शास्त्रज्ञो दैवतैरपि पूज्यते'।

इति नीतिविदः। 'अकुलीनोऽपि विनीतः कुलीनाद्विशिष्टः' इत्येवं पाठान्तरत्वे। विनयाचरण-युक्तो जनोऽकुलीनोऽपि कुलीनात् श्रेष्ठो भवतीत्यर्थः स्यात्। प्रागुक्तमार्य्यलक्षणम्। कुलस्यापत्यम्। 'कुलात् खः'। 'अपूर्वपदादन्यतरस्यां यड्ढकञौ चेति' सिद्धम्। आर्य्य इति। ऋ गतौ, अर्य्यते। 'ऋ हलोर्ण्यत्' इत्यनेनार्य्यपदं सिद्धम् ॥ ३७ ॥

**आचारादायुर्वर्द्धते कीर्त्तिश्च ॥ ३८ ॥**

**प्रियमप्यहितं न वक्तव्यम् ॥ ३९ ॥**

---

सदाचरणस्य फलमाह आचारादिति। आयुर्जीवितकालः। कीर्त्तिर्यशो गुणप्रचार इति। द्वावेतौ आचारात् सदाचरणात् मनुष्यस्य वर्द्धेते। 'आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः' इति धर्मशास्त्रकाः। ताहगाचरणेन स्वास्थ्यम्, स्वास्थ्यादिन्द्रियनैर्मल्यम्, तस्मादबुद्धेः प्राखर्य्यं नैपुण्यञ्च, ततो ह्यायुषो वर्द्धनम्। आचारः कुत्रचिद् व्यवहारः। यथा च बृहस्पतिः 'आचारेणावसन्नोऽपीति' प्राग्युक्तम्। सदाचरणं त्रिविधम्। ब्रह्मसम्मताचरणम्। कौलिकम्। शास्त्रीयञ्चेति। आयुः। इण गतौ, एति। 'एतेर्णिच्च' इत्यौणादिकसूत्रादुसिः। 'कीर्त्तिः प्रसादयशसोर्विस्तारे कर्दमेऽपि च' इति व्याड़िः। कृत संशब्दने, कीर्त्यते। 'ऊति यूति' इत्यादिना कीर्त्तिपदं निपातितम्॥ ३८॥

लोकानामुद्वेगकारत्वादहितं प्रियकथने अनौचित्यमाह प्रियमिति। प्रियं प्रतिजनकं श्रवणमनुकूलमिति यावत्। तद्यदि अहितमनिष्टकरं स्यात्तदा न वक्तव्यम्। तदुक्तं मानवे 'न ब्रूयात् सत्यमप्रिय'मिति। 'प्रियञ्च नानृतं ब्रूयादि'ति च तत्रैव। यत्र तु समाजानिष्टं महदापतति तत्र तावुभौ वक्तव्यौ इति केवलनीतिविदः। यतोऽल्पनाशाय बहुहानं नोचितम्। तत्र विषये गुरुत्वलघुत्वे चिन्तनीये। 'प्रियौ हृद्येप्सिते ह्यथेऽनुकूले धवे'

## भूत्यनुवर्त्तनं पुरुषस्य रसायनम् ॥४४॥

---

निःशेषतोऽपि सततम्। अशेषः परिशेषरक्षितकरणं युक्तम्। यत एते लेशतो विद्यमाना अपि परं परिवर्द्धन्ते। वह्निरल्पस्तृणस्य महानलवत्। शेषैर्विनाशो दाहो चाग्निर्दहनात्मकत्वात्सम्भवित्य-तीति। अतस्तेषां समुच्छेदेन निःशेषता कार्य्या। तथा च महर्षिः—

'ऋणशेषोऽग्निशेषश्च व्याधिशेषस्तथैव च।
शत्रुशेषः पापशेषो निःशेषमपि शेषयेत्'॥

'ऋणाग्निव्याधितेष्वशेषः कर्त्तव्यः' इत्यं सूत्रपाठे चार्थासारस्यं नास्ति। ऋ गतौ, अर्य्यते। इत्यतस्तः। 'ऋणमाधमर्ण्ये' इत्य-नेन नत्वम्। प्राग् निरुक्ता अग्न्यादिशब्दाः ॥ ४३ ॥

ऐश्वर्य्यानुवर्त्तने पुंसो हितमाह भूत्येति। भूतिः विपुलधनैश्वर्य्यस्य च। अनुवर्त्तनमनुधावनमिति। पुरुषस्य मानवस्य। रसायनम्। अतिशय सुखजनकत्वेन जराव्याधिविनाशकम्। रसस्य नवनवरीत्यायनं देहपुष्टिकरं येनोपायेन तत्। तदुक्तं वैद्यके—

'यज्जरा-व्याधि-विध्वंसि, भेषजं तद्रसायनम्'।

तत्रैवान्यच्च—

'यज्जराव्याधिविध्वंसि वयसस्तम्भकन्तथा।
चक्षुष्यं बृंहणं वृष्यं भेषजन्तद्रसायनम्'

## नार्थिषु अवज्ञा कार्या ॥४५॥

रसायनफलं यथा तत्रैव—

'दीर्घमायुः स्मृतिर्मेधामारोग्यं तरुणं वयः ।
देहेन्द्रियबलं कान्तिं नरो विन्देद्रसायनात्' ॥

ऐश्वर्येण पार्थिवत्वं निश्चितमेव । 'विभूतिर्भूतिरैश्वर्य'मित्यमरः । यथा रसायनेन पुरुषस्य बृंहणादि भवति तद्वद् विपुलधनेनापि लोको गर्वितो मत्तः सुखी च भवति । वैद्यके भावप्रकाशादौ रसायनस्वरूपं सम्यगस्ति ॥ ४४ ॥

धनादि-प्रार्थनाकारिणो जनान् प्रति हेयकरणनिषेधमाह नेति । अर्थिषु याचकेषु प्रार्थनाकारिषु इति । तादृश जनेषु अवज्ञा अवमाननं हेयज्ञानञ्च न कार्यम् । वरं तेषां यथाशक्ति धनादिना साहाय्यमेव सम्यग् विधेयम् । कथितमन्यत्र—

'धनदानेन दीनानां दुःखहर्त्ता जनोत्तमः ।
येनैवं क्रियते लोके स सुधीः सच स्वर्गभाक्' ॥

तथा च—'याचकं नावजानाति प्रीतिं करोति सर्व्वदा ।
ददाति किञ्चित् स्नेहेन स धनी पुरुषोत्तमः' ॥

यदा च धनादेरभावस्तदा मधुरवाचा विनयादिना च याचकास्तोषणीया इति नियमः साधुः । स्वाभाविकनियम एव धनिर्दीनानाथेभिरुपकारसाधनमिति । अवज्ञानमवज्ञा, अवपूर्वाज्ज्ञाधातोः 'आतश्चोपसर्गे' इत्यङ् । 'वनीयको याचनको मार्गणो याचकार्थिनौ' इत्यमरः । अर्थोऽस्यास्तीति 'अर्थाच्चासन्निहिते'

सुदुष्करं कर्म्म कारयित्वा कर्त्तारं नावमन्येत
॥ ४६ ॥

न कृतघ्नस्य नरकान्निवर्त्तनम् ॥ ४७ ॥

---

इति वार्त्तिकादिनि. । यद्वा यर्थ याचने, अर्थयते । ग्रहाादित्वात् णिनि ॥ ४५ ॥

दुष्करकर्म्मानुष्ठानात् परं तत्कर्त्तुरवमाननं नोचितमित्याह सुदुष्करमिति । सुदुष्करमतिकठिनं दुःसाध्यमिति । यत् कर्म तत्कारयित्वा सम्पादयित्वाऽभिनिष्पाद्य च । वैधाख्यकृति कार्य्ये तत्कर्त्तारं कार्य्यानुष्ठातारं नावमन्येत । नं नाव-जानीयात् । 'दुष्करं कर्म्म कारयित्वा कर्त्तारमवमन्यते नीच' इत्येवं पाठान्तरत्वे नीचोऽजन. दुष्करं कर्म्मकारयित्वा तत्कर्त्तारं अवजानातीत्यर्थ. । यदि कर्म्मकर्त्तुर्दोषो वर्त्तते तदा तस्य गर्हणं युक्तमिति । कर्म्मणो दुष्करत्वे तत्फलस्यालाभे तत् कर्त्तुर्न दोष इति प्राज्ञानामभिमतम् । अज्ञानान्तु तद्विपरीतम् । कारणगतदोषात् कार्य्यहानिरिति समाधि. । असम्यक्ने कर्म्मणि निष्पन्ने वा तत्कर्म पुनरनुष्ठेयम् ॥ ४६ ॥

कृतघ्नस्य तत्कार्य्ये फलं नरकमात्र नेति । कृतघ्नस्याकृतघ्नस्य । कृतमुपकारं हन्तीति तस्य । नरकाद्विरयात् परमदुर्गतेः । न निवर्त्तनं नापि तस्मादव्याहतिः परन्त्वत्रैव पापाधिक्याच्चिरनिवास. । तदुक्तं विष्णुना—

**विषामृतयोराकरो जिह्वा ॥४९॥**

**प्रियवादिनो न शत्रुः ॥५०॥**

---

लिह आस्वादने, लेढ़ि। लिहन्ति अनया वा 'शेवयह्व जिह्वा' इत्यौणादिकसूत्रात् तत्पदं साधु। केचित्तु लिहेः 'पूर्व्वं जिह्वा पीवा' इति वन्प्रत्ययस्तेन सिद्धम्, पृषोदरादित्वाडेत्याहुः ॥४८॥

प्रागुक्तविषयस्य स्फुटीकरणमाह विषेति। विषं क्ष्वाडश्च गरलञ्चेति। अमृतं सुधा मृतिरोधकम्। एतयोर्द्वयो जिह्वा रसना आकरः क्षेत्रं प्रसवभूमिः। जिह्वासाहाय्येन वागिन्द्रियं सद्वक्ति तेन सुधोपमः व्यवहारः, सर्व्वत्र कार्य्यं सौख्यञ्च। दुर्व्वाक्यं वक्ति चेत्तेन विषवत्कष्टदायकं स्यात्। जिह्वा हि परमेशनाम जपादिमन्त्रसाधनेन निर्वाणमपि प्रापयति। यद्वा असत्तुल्या वाग्वज्रप्रहारैव विषमुद्गिरति, जनं दुःखयति स्वात्मानमपि पीड़यति च। तेन हि लोकाः शत्रवो भवन्ति। स्वितमित-तथ्यवचोभिर्निधनादपि समुत्तार्य्यं भवति। विषू व्याप्तौ, विष प्रवेशने वा। उभयोः क्विपा सिद्धम्। अमृतमविद्यमानं मृतं मरणमत्र। मृङ् प्राणत्यागे, इत्यस्माद् भावे क्तः। 'आकरो निकरे श्रेष्ठौ' इति कोषः। कृञ् करणे, आकुर्व्वन्त्यत्र, कॄ विक्षेपे, आकीर्य्यन्ते वस्तून्यत्रेति वा 'पुंसि संज्ञायाम्' इति घप्रत्ययः ॥ ४९ ॥

हितवादिनो जनस्यारात्यभावमाह प्रियेति। प्रियवादिनः। प्रियमनुकूलं मधुरमिति यावत्। तद्वक्तुं शीलमस्येति। प्रिय-

स्तुता देवा अपि चिरन्तुष्यन्ति ॥५१॥
अनृताऽपि दुर्न्वचयिरन्निष्टति ॥५२॥

आत्म-कदन-शीलस्य जगति कोऽपि गवुरराविर्न भवतीत्यर्थः। उतश्च कविभिः 'हितं मनोहारि च दुर्लभं वचः'। अन्यच्च—

'मधुरोक्त्या हितःतथः च प्रियो भवति सर्वतः।
पारुष्यवचनात्सुहृद्दुर्जनो भवति निश्चितम्' ॥

अपरञ्च—

'हितयाज्यप्रयोक्तुश्च दातुः परोपकारिणः।
साधोर्वाक्यस्य जगति रिपुर्नैव महत्यते' ॥

प्रीञ् तर्पणे, प्रीणाति। 'इगुपध' इत्यादिना कः। 'मियोऽन्तरीयमेते प्रयो धवे' इति हैमः। प्राङ्निरुक्तमन्यत् ॥ ५० ॥

प्रियाचरणेन देवानामपि परितोषमाह स्तुता इति। स्तवेन आरोपितगुणादि कथनेन परिष्टुताः। गौरविताः। देवा अमरा इन्द्रादयः। अपि निश्चितं, चिरमनियम्। तुष्यन्ति सन्तुष्टाः प्रसन्ना भवन्ति किंपुनर्मानवाः ? देवा अपि सुप्रसन्नाः स्युः। अतः स्तुतिवाक्येन प्रशंसया वा सर्वे सन्तोष्याः जगति न कोपि गुणान् हित्वा स्वदोषं स्वापमानवचनञ्च योगुमिच्छति अप्रीतिकरत्वादुद्वेगकरत्वाच्च। ये पराराधन-निपुणाः प्रियभाषिणस्ते अनायासेन कृतकृत्याः स्युः। तुष् तुष्टौ, स्तुविति स्तौति च। ततो कर्मणि क्तप्रत्ययः ॥ ५१ ॥

असत्याद् दुर्वाक्यस्य दोषकानस्याधिक्यमाह अनृतादिति।

## राजद्विष्टं न च वक्तव्यम् ॥५३॥

---

अनृतान्मिथ्यावाक्यात्। दुर्वचः दुष्टवाक्यं कुत्सितवाक्। यद्वा हृदय-शल्यापकारि-परावज्ञाकारिवचः। चिरं सुदीर्घकालं तिष्ठति। असत्यं सत्यवचसा तिरोधत्ते। दुर्वचस्तु हृदयपद-लेनाचिरं कालं व्याप्नोति। अतो दुर्वचनं सदा परिहर्त्तव्यम्। अस्मिन् विषये प्रागुक्तमन्यत्। 'अनृतमपि दुर्वचनं चिरन्तिष्ठति' इत्थं पाठभेदे सुगमार्थमिदं सूत्रम्। अनृतं मिथ्या, यद् दुर्वचनम्, तत् दीर्घकालं तिष्ठत्येव ॥ ५२ ॥

नृपविरुद्धभाषणे ह्यनिष्टं राजावज्ञा-प्रकटनञ्चभवति तन्निषेध-माह राजेति। राज्ञो नृपाणां भूभुजामिति। द्विष्टं द्वेषान्वित-मप्रियसूचकमिति यावत्। तत्कदापि न च वक्तव्यम्। यतः तेषां क्रोधो महानिष्टकरः तादृशेन वाक्येन समुत्पद्यते। बहु-यावथ्यं दण्डादिना हानं स्यात्। अत्र राजेत्युपलक्षणम्। तेन देव-गुरु-साधु-सोमयाजिनो महाजनानां द्विष्टमपि वचः परिहार्य्यम्। 'राजद्विष्टं न वक्तव्य'मिति पाठान्तरं दृश्यते। तेन नार्थपार्थक्यम्। 'अत्र चकारोपादानेन सर्वथा निषेधः सूचितः। राजानुष्ठित-कार्य्यस्य विरुद्ध समालोचनं तद्भाविकार्य्ये आरोपो विधानलङ्घन-मपि तेन प्रतिषिद्धं प्रजानां हानिकारत्वादिति। तथा च प्राहुः 'राजानमग्निमिवान्यत् पालयेत्' इत्याहुः। द्विष् अप्रीतौ, द्वेष्टि। ततः क्तप्रत्ययः ॥ ५३ ॥

श्रुतिसुखाः कोकिलालापाः ॥५४॥
तप्यते दुष्करकारो बलवान् नाम ॥५५॥

---

पिकस्य श्रवणस्य श्रोत्रेन्द्रियप्रीतिकरत्वमाह श्रुतीति। श्रुतिः श्रवणं तदिन्द्रियमिति। तस्य सुखाः प्रीतिजनकाः। कोकिलानां वनप्रियाणां ये आलापाः कूजनाः मधुरस्वरास्ते पक्षिणां सतोऽपि जाताः श्रवणाभिरामाः चित्तविनोदकराश्च भवन्ति। किमुत मानवमधुर-वाक्यानां वामयचसां वा मनोभिरामत्वे। 'वनप्रियः परभृतः कोकिलः पिक इत्यपि' इत्यमरः। कुक शब्दादौ, कोकते। 'सन्तिकुर्वन्ति' इति बलव्। 'श्रुतिसुखात् कोकिलालापात् तुष्यन्ति' इति पाठान्तरे श्रुतिसुखकरपिकालापश्रवणात् लोकाः परितुष्टा भवन्ति। सुखं नाम सर्वेषां मनुष्येभ्यकरमनोवृत्तिमात्रम्। 'श्रुतिः स्त्रीवे [illegible] तत्कर्मप्रत्याम्नाययोरर्थयोः स्त्रियाम्' इति कोषः। श्रु श्रवणे, श्रूयते अनयेति करणे क्तिन्। ५४।

असाधु-कर्मानुष्ठातुः पश्चात् सन्तापानुभवमाह तप्यत इति। दुष्करकारी दुराचारो क्रूरकर्मा कठोरस्वभाव इति। बलवान् अतिसमुद्योगसम्पन्नः निपुणोऽपि तप्यते परिक्लिश्यति। क्रोधा नुष्ठितगर्हितकर्मफलेन स्वयमेवानुतप्तो भवति। यादृशं कर्म तत्फलन्तु तादृशमेव स्यादिति नियमात्। यथा शैशवेऽनधीतविद्यस्य तारुण्ये अनुतापः, साधुकारी तु सर्वं सुखी परहित-

**स्वधर्म्महेतुः सत्पुरुषः ॥ ५६॥**

**नास्ति अर्थिनो गौरवम् ॥५७॥**

---

कारी च। 'दुष्करं कठिनं कार्य्यं गर्हितं पापकर्म्मणि' इति कोषकारः। दुष्करं कर्त्तुं शीलमस्येति ताच्छील्ये करोतेर्णिन्। 'यत्नवांश्च समुद्योगी कार्य्ये जागरुकः सदा' इति च। पदनिरुक्त्यादि प्रागुक्तम् ॥ ५५ ॥

स्वधर्म्मार्ज्जनात् पुंसां श्रेष्ठत्वमाह स्वेति। स्वस्यात्मनो यो धर्म्मस्तस्याचरणाद्धेतोः। तदाचरणशीलः सदुत्तमः श्रेष्ठो मानवः स्यात्। यद्वा यो विद्याचारित्र-ज्ञानादिना स्वधर्म्मस्य हेतुः कारणं भवति स एव जगति सदुत्तमः पुरुषो भवेदिति। सत्पुरुषः स्वधर्म्ममनुष्ठाय परेषामपि धर्म्माचरणोपदेशे धार्म्मिकत्वेन हेतुर्भवतीति सारः। तदुक्तं धर्म्मशास्त्रे—

'वरं स्वधर्म्मो विगुणो न पारक्यं स्वनुष्ठितम्'।

तदेवान्यत्र—

'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः' इति गीतायाम्। परस्यान्यस्य धर्मः परधर्मः। अन्यदीयत्वेन प्रकृतिप्रतिकूलत्वाद् भयावहः। यद्वा परः श्रेष्ठो धर्मः तस्यानुष्ठाने क्लेशप्रदत्वाद् भीतिजनकः। 'स्वधर्महेतुभूतः सत्पुरुषविशेषः' इत्थं पाठभेदे सूत्रार्थस्तु सुगमः। सत्पुरुषविशेषः एव स्वधर्महेतुभूता न सर्वे जनाः। प्राङ्निगदितमन्यत् ॥ ५६ ॥

याचकस्य श्रेष्ठत्वाभावमाह नेति। अर्थिनो याचकस्य

## स्त्रीणां भूषणं सौभाग्यम् ॥५८॥

प्रार्थिनः। यद्वा धनवतो वादिनश्च। गौरवस्य प्राधान्यस्य मान-नोयत्वस्याभावः स्यात्। यतः प्रार्थिनः स्वदैन्यप्रकाशेन गौरवम् क्षयति। धनवतश्च तद्रक्षाकार्ये सततं चञ्चलत्वाद्दानाभावे कृपणत्वेन निन्दा प्रसरति। वादिनश्च विवादे जयाशया गौरवं हित्वा स्वकार्यसाधनाय च लघुत्वमपि श्रेयः स्यात्। एकस्य हानिं चान्यस्य प्राप्तिरवश्यम्भाविनीति। 'प्रार्थने माननाशश्चेति' लघुचाणक्ये। 'कार्ये कस्यास्ति गौरवम्' इत्यन्यत्र। अपरञ्च—

'कार्यसाधन-व्यग्रस्य लघुत्वं कुत्रचित् भवेत्'।

सूत्रमिदं यद्यपि चाणक्ये नोपलभ्यतेऽन्यत्र विद्यते। तथैव च—

'स्वकार्यमुद्धरेत् प्राज्ञः कार्यध्वंसे च मूर्खता'।

इति नीतिरेषा मनोरमा। गुरोर्भावो गौरवम्। श्रेष्ठत्वमित्यर्थः ॥ ५७ ॥

नारीणां विशेषभूषणमाह स्त्रीणामिति। स्त्रीणां महिलानां वरवर्णिनीनामिति। भूषणमलङ्कारः सुषमाकरः। सौभाग्यं शुभाहृष्टलक्षणं पति-पुत्रवत्त्वम्, पातिव्रत्यञ्च। 'लज्जैव भूषणं स्त्रीणा'मिति केचित्। 'क्षमा लज्जा च योषिति' इत्यपरे।

'सौभाग्यलक्षणं स्त्रीणां पातिव्रत्यं प्रकीर्तितम्' इत्यन्ये। 'असौभाग्यं ज्वरः स्त्रीणाम्' इति वृद्धचाणक्ये च। पतिपत्न्योर्विवाहमाङ्गलिकसंस्कारेण ऐकात्म्यात् पतिभक्त्वं परं सौभाग्यसूचकम्। तथा च श्रुतिः 'मम व्रते ते हृदयं दधाति'।

## शत्रोरपि न पतनीया वृत्तिः ॥५६॥

---

'ध्रुवा द्यौः, ध्रुवा पृथिवी, ध्रुवं विश्वमिदं जगत् ।
ध्रुवास पर्वता इमे ध्रुवा स्त्री पतिकुले इयम्' ॥ इत्यादि च । 'सौभाग्य कर्तुराचारता' इति पाठभेदे कर्तुं, पत्युश्च य आचारस्तादृश एवाचार नार्य्या कार्यः । नतु स्वेच्छाचार । आचारशीलता पत्यु परिचर्या वा । अपरे तु तासा 'देवसेवा विनय क्षमा पातिव्रत्येन सहैते सौभाग्यगुणाः' इत्याहु । अपरास्तु 'शिल्प धैर्यं गृहकर्मदाक्ष्यं विद्या विनय'श्चेति प्राहु । सुभगस्य भाव सौभाग्यम् । सुभगशब्दात् ष्यञ् ॥ ५८ ॥

परातिरपि वृत्तिसमुच्छेदे निषेधमाह शत्रोरिति । शत्रोररातेरपि निश्चितम् । वृत्तिर्जीविका । यया वृत्त्या भोजनाच्छादनावस्थिति निर्वाह स्यात् सा । न पतनीया नापि समुच्छेद्या । अपि तु विदुषा सा रक्षणीया । अत्र पतनीयेति पातनीयेत्यभवति एतन्निवचया । उक्तञ्च 'वृत्तिच्छेदेन तद्वध' इति । अत्र वृत्तिच्छेदो जीविकाहानिकरणम् । 'शत्रुभिरनभिपतनीया प्रवृत्ति' इति भिन्नपाठोऽप्यस्ति । मनस्विन पुंस प्रवृत्ति । शत्रुभिरनभिपतनीया शत्रो सम्यक् आक्रमणशून्या भवतीत्यर्थ । तेन क्षमणीयः शत्रोराक्रमण प्रतिवध्य सर्वत्र स्वसामर्थ्य प्रकटयति । 'वृत्तिर्विवरणा जीव्ये कैशिक्यादिषु चेष्यते' इति विश्व ॥ ५८ ॥

अप्रयत्नोदकं क्षेत्रम् ॥६०॥

परगण्डमवलम्ब्य कुञ्जरं न कोपयेत् ॥६१॥

---

क्षेत्रनिरूपणमाह अप्रयत्नेति। क्षेत्रं सस्यादीनां प्रसवभूमिः। अप्रयत्नोदकम्, अप्रयत्नेनानायासेन सुलभतोयोदकं जलं यत्र तत् क्षेत्रं प्रशस्तमित्यर्थः। निवासादेरपि तद्योग्यम्। अन्यत्र तु क्षेत्रं सस्यानाम्, सस्योत्पादननिवासादेर्योग्यम्। अनुधावन्तं सागरसन्निहितं निःसिकतं समुर्व्वरं क्षेत्रं कृषि-वासादेर्योग्यं प्राशस्त्यकरञ्चेति। 'अप्रयत्नादेकं क्षेत्र'मिति पाठान्तरम्। तेन प्रयत्नाभावात् कर्षणकेदारबन्धन-सलिल-सेकादिरहितं क्षेत्रमेकं कार्य्योपयोगि भवतीत्यर्थो न पृथक्। 'कबन्धमुदकं पाथः' इत्यमरः। उदकम्। उन्दी क्लेदने धातुः। 'उदक'मित्युणादिसूत्रेण साधुः। न तु उन्दतीति क्षीरस्वामिमते, उन्देरौणादिकत्वात्। 'क्षेत्रं शरीरे केदारे सिद्धस्थान-कलत्रयोः' इति विश्वः। क्षि निवासगत्योः, क्षीयते धान्यादिभिरस्मिन्निति। ततः क्षिधातोः ष्ट्रन् ॥६०॥

अयोग्यतदुपायेन तत्कार्य्यसाधननिषेधमाह परगण्डेति। परगण्डमुरगकगणं सारशून्यमदृढम्। तद्गण्डत्वेनावलम्ब्याश्रित्येति। कुञ्जरमैरावतं महाकायधारणम्। न कोपयेत् न संरोपयेत्। तेन तस्य ताडन-भिरस्ति-निग्रहसम्भावनाः सर्व्वतो विरताः एव। परक्षेत्र तस्य जनस्य महानिष्टं स्यात्। प्रहासे तु

## अतिप्रवृद्धा शाल्मलिर्न वारणस्तम्भः ॥६२॥

---

बलवता शस्त्रपाणिना नृपेण सह निरस्त्रो दुर्बलो नैव विग्रहीयो-द्विवदेत। तादृश विग्रहे स्वात्मनाशसम्भवः। यद्वा यादृक् कार्य्यं कुर्य्यात् प्राक् सामग्री-समवधानमपि तादृगेव कर्त्तव्यम्। नतु लघूपायेन गुरुकार्य्यसाधनम्। यथा नखनिकृन्तनेन सारवद्वृह-त्तरुच्छेदनं युक्तम्। तत्र हि करपत्र-कुठारयोः साधकतम-त्वात्। 'एरण्ड उरुबूकः' इति वोपालितः। तथैवामरोऽपि। ईर गतौ कम्पने च, आ ईरति वायुम्। एरण्डतैलस्य वायुनाश-कत्वा देवं मूलत्वचोऽपि। अस्यापिजन्तादावीर्बाहुलकादण्ड च्। द्विविधोऽयमेरण्डः। रक्तः श्वेतश्चेति। विशेषतो वैद्यकेऽस्य गुणा-दिकं रोगहारित्वञ्च वर्णितमस्ति ॥ ६१ ॥

असारद्रव्यस्य सुकठिनकार्य्यसाधनेऽयोग्यत्वमाह अतीति। अतिशयेन प्रवृद्धा पुरातना, प्रकाण्डा विशाला शाल्मलिः स्थिरायु-र्द्रुमः। वारणस्य कुञ्जरस्य स्तम्भो बन्धनस्थूणा न भवति। प्राचीन-प्रकाण्डोऽपि शाल्मलितरुः असारत्वादकाठिन्याच्च वारण-बन्धनायालमिति। यतो यत् यद्साधकं तदतिस्थूलत्वेनापि योग्यं न भवति। नहि मेदगदेन पीवरकायः पुमान् नीरोग-बलवत् समकार्येन योद्धुं तं निवारयितुं वा शक्नोति तादृश-सामर्थ्याभावात्। शाल्मलितरोर्दीर्घत्वं यथा 'षष्टिवर्षसहस्राणि वने तिष्ठति शाल्मलिः' इति वचनात्। 'पुरणी शाल्मलिद्रुमे' इति कोषः। 'स्थिरायुः शाल्मलिर्द्वयोः' इत्यमरोऽपि। अस्य

**अतिदीर्घोऽपि कर्णिकारो न मुसलो ॥६३॥**

**अतिदीप्तोऽपि खद्योतो न पावकः ॥६४॥**

---

चम्नति, शामयतीति निशम्लस्तस: क्विप्। मल धारणे, मलते। 'सार्व्वधातुभ्य इन्' इतीन्। शान् चासौ मलिनेति कर्मधारयात्तत्पुरुष॥ ६२ ॥

पूर्व्वप्रकृततत्पर्य्यस्य विगदीकरणसूचकमिदं सूत्रम्। उदाहरणान्तरमाह अतीति। कर्णिकारः परिव्याधस्तदाख्यो द्रुमः। यद्वा तत्फलम्। सोऽतिदीर्घोऽपि द्राघीयानपि नमूसलो नापि तालमूलिका भवति वस्तुनः सामान्यात्।

'मुसलं स्यादयोऽग्रे च पुं नपुंसकयोः स्त्रियाम्।

तालमूल्यामाखुपर्णी गृहगोधिकयोरपि' ॥ इति मेदिनी। अन्यत्र 'मुसलीगृहगोधिका ज्येष्ठी'। 'कर्णिकारः पुमानारग्वधे द्रौ च द्रुमोत्पले' इति मेदिनी। अथवा अतिदीर्घोऽपि कर्णिकारः न मूसली मूसलधारीव भवति। दोर्घः। दृ विदारणे, दृणाति। वाहुलकाद्यक्। कर्णिकामियर्त्तीति कर्म्मण्यण्। मुस खण्डने, मुस्यति। 'वृषादिभ्यश्च'इत्यौणादिकत्वात् कलच्। स्त्रीविषयत्वेन, गौरादित्वात् ङीप्, कचिदाकृत्या साहृश्येऽपि वस्त्वेकं भन्यपरं भवतीति। 'न दीर्घोऽपि कर्णिकारः मूसलो भवति' इति पाठभेदे दीर्घोऽपि कर्णिकारः तद्फलस्वाकारसाहस्यात् न मूसलो भवतीत्यर्थः। सुगममन्यत्र॥ ६३ ॥

पूर्व्वोक्तविषय-समर्थन दार्ढ्योदाहरणान्तरमाह अतीति।

## न प्रवृद्धत्वं गुणहेतुः ॥६५॥

---

अति दीप्तोऽतिशयेन प्रज्वलितः । खद्योतोज्योतिरिङ्गणः । अपि प्रकाशवत्त्वात् पावकः । नाप्यनलो भवति शक्तिवैषम्यात् । यथा डुण्डुभोऽहित्वाविशेषेऽपि न जाति-सर्पः । एवं मन्दार-महीरुहस्य वृहत्त्वेऽपि न स सारवत् शालकाष्ठायते । दीप्तः । दीप दीप्तौ, दीप्यते । ततः क्तप्रत्यय. । खे आकाशे द्योत्यते । खं द्योतयतीति क्रमेणाचा यणा वा सिद्धम् । 'पावकोऽग्नौ सदाचारे वह्निमन्थे चे'ति कोशात् । पुञ् पवने, पुनाति । ण्वुल्प्रत्ययेन सिद्धः । 'अतिज्वलितोऽपि खद्योतो न पावको नियुज्यते' इति पाठान्तरत्वे नार्थे वैषम्यम् । सुगमार्थमेतत् सूत्रम् ॥ ६४ ॥

प्रवृद्धत्वस्य गुणहेतुत्वेनिषेधमाह नेति । प्रवृद्धं प्रकाण्डरूपेण वार्द्धक्यम् । अतिमान्यत्वं प्राबल्यञ्चेति यावत् । न गुणहेतुः । गुणानां चारुत्वौदार्य धैर्यादीनाम् । हेतुः कारणं न भवतीत्यर्थः । परं पाण्डित्येन सत्त्वज्ञानेन च युवापि प्रवृद्धत्वं याति । तदुक्तं पालिग्रन्थे—

> 'न तेन थेरोहोति येनऽस्सफलितं सिरो ।
> परिपक्को वयो तस्स मोघजिण्णोति वुच्चति' ॥

मानवे एतस्यानुरूप श्लोकोयोऽस्ति प्रागुक्त एव सः पुनरुक्तिभिया-नालोच्यते । अन्यत्र—

